स्यादि, न पुनः क्वापि "दिवसं अहोरत्तं दुन्नि अहोरत्ते वे"त्यादिपाठः संप्रदायादागतः, न चैतत्काल्पनिकं, तत्त्वार्थवृत्तिकृता तथैव प्रदर्शितत्वात्, तथाहि—यथाऽणुव्रतानि तथा गुणव्रतान्यपि सकृद्गृहीतानि यावज्जीवं भावनीयानि, शिक्षापदव्रतानि सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि चत्वारि, प्रतिदिवसमनुष्ठेये द्वे सामायिकदेशावकाशिके, पुनः पुनरुच्चार्ये इतियावत्, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ,पुनः पुनरष्टम्यादितिथिष्वनुष्ठीयेते इति, शिक्षा–अभ्यासस्तस्याः पदानि–स्थानान्यभ्यासविषयास्तान्येव व्रतानि शिक्षापदव्रतानि, गुणव्रतानि तु न प्रतिदिवसग्राह्याणि सकृद्ग्राह्याण्येव इति तत्त्वार्थवृत्तौ पत्र १९४ सर्वपत्र २६३, अत्रोक्तवाक्यद्वयस्यापि पुनः पुनरष्टम्यादितिथिष्वनुष्ठेयेते इति परमार्थः प्रदर्शितः, अत एव प्रथमपञ्चाशकवृत्तौ श्रीअभयदेवसूरिभिः पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयावित्येकमेव वाक्यं निगदितमिति गाथार्थः ॥८०॥ अथ विरोधमाह—

सिक्खा पुण अब्भासो करणिज्जं पइदिणं खु तंपि वयं। अट्ठमिमाइसु कज्जो नन्नासु विरुद्धवयणमिणं ॥८१॥

शिक्षा पुनरभ्यासो भण्यते, तच्च व्रतं प्रतिदिनं–दिनं२ प्रति करणीयं–कर्त्तव्यम्, अन्यथाऽभ्यासस्यैवासंभवाद्, अभ्यासो हि प्रतिदिनं कर्त्तव्याहः, यदुक्तं–"अञ्जनस्य क्षयं दृष्ट्वा, वल्मीकस्य च वर्द्धनम्। अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥१॥"इत्येवं सत्यप्यष्टम्यादिष्वेव पौषधो विधेयो नान्यास्विति विरुद्धवचनमिदमिति गाथार्थः ॥८१॥ अथ प्रतिबन्दीमाह—

सिक्खावएसु चउसुवि तिण्णि वयाइं तु सम्मयाइं तुहं। पइदिणकरणिज्जाइं किं पोसहपंतभेएण? ॥८२॥

शिक्षाव्रतेषु चतुर्षु त्रीणि व्रतानि सामायिकदेशावकाशिकातिथिसंविभागनामानि तु तवापि–खरतरस्यापि प्रतिदिनं करणीयानि

रम्भतानि, किं पौषधपङ्क्तिभेदेन—पौषधस्य पङ्क्तिभेदः क्रियते तत्र किं कारणं ?, को वा पौषधस्यापराध इति गाथार्थः ॥ ८२ ॥ अथातिप्रसङ्गज्ञानाभावमाह—

न मुणइ अइप्पसंगं अतिहीणं संविभागकरणंमि । नवमीपमुहतिहीसुं उवएसंतोवि निल्लज्जो ॥ ८३ ॥

नवमीप्रमुखतिथिषु—पौषधिको हि पारणके साधुभ्यो दत्त्वैव भुंक्ते इत्यादिरूपेण नवम्यादिषु तिथिष्वर्थादतिथिसंविभागमुपदिशन्नपि निर्लज्जो—लज्जारहितोऽतिथीनां साधूनां संविभागेऽतिप्रसङ्गं न जानाति, यदि शिक्षाव्रतरूपोऽपि पौषधोऽष्टम्यादितिथिष्वेव युक्तस्तर्ह्यतिथिसंविभागोऽपि तथैव युक्तो भवेत्, तथा च नवम्यादिषु तत्प्रतिषेधप्रसङ्गः, न चार्थादतिथिसंविभागो नवम्यादिष्वेव संभवतीति शङ्कनीयम्, अष्टम्यादिष्वपि जिनवल्लभेनापि भणनात्, तथाहि—"जो पुण आहारपोसही देसओ सो पुण्णे पच्चक्खाणे तीरिअ खमासमणदुगेण मुहपुत्तिं पडिलेहिअ खमासमणेण वंदित्ता भणइ—इच्छाकारेण संदिसह भत्तपाणं पारावेह,पोरसि पुरिमड्ढ चउविहार एगासणं निव्विअं आयंबिलं वा कयं, जा काचि वेला ताए पारावेमि,तओ सक्कत्थएण चेइए वंदिअ सज्झायं सोलस वीसं वा सिलोगे काउं जहासंभवमतिहिसंविभागं दाउं मुहहत्थपाए पडिलेहिअ नमोकारपुव्वमरत्तदुट्ठो भुंजे" इति पौषधविधिप्रकरणे, ननु सोऽतिथिसंविभागो द्वादशव्रतं न भण्यते, किंतु यदागमः—"साहूण कप्पणिज्जं जं नवि दिण्णं कहंचि किंपि तहिं । धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥१॥" त्ति श्रीउप०, इति चेच्चिरं जीव, 'तुष्यतु दुर्जन' इति न्यायाद्यथा द्वादशव्रतस्वरूपाभावेऽपि निर्जराहेतुत्वेन साधुदानमभ्युपगम्यते तथैकादशव्रतस्वरूपाभावेऽपि निर्जराहेतुत्वेन प्रतिदिनं पौषधोऽप्यभ्युपगन्तव्यो, न्यायस्य समानत्वादिति गाथार्थः ॥८३॥ अथ पौषधो हि प्रतिक्रमणवन्नियतकालानुष्ठानं भविष्यतीतिपराशङ्कामपाकरोति—

पडिक्कमणं पच्छित्तं रयणीदिणपमुहपावसंबंधी। तद्दिट्ठंतो संवररूवे कह पोसहे जुत्तो ? ॥८४॥

प्रतिक्रमणं-रात्रिकदैवसिकपाक्षिकचातुर्मासिकसांवत्सरिकलक्षणं पञ्चविधमपि रजनीदिनप्रमुखपापसंबन्धिप्रायश्चित्तं तद्दृष्टान्तः संवररूपे पौषधे कथं युक्तो ?, न कथमपीत्यर्थः, प्रायश्चित्तं च यथोक्तमेव भवति, नाधिकमिति गाथार्थः ॥४८॥ अथ प्रायश्चित्तं नाधिकं भवतीति दर्शयति—

असिइसयं उववासा पच्छित्तं आगमुत्तमुक्कोसं। न तहा सेसतवेसुं संवररूवेसु निअमोऽवि ॥८५॥

अशीतिशतम्-अशीत्याऽधिकं शतमशीतिशतमुपवासाः उत्कृष्टं प्रायश्चित्तमागमोक्तं, न तथा संवररूपेषु शेषतपस्सु-गुणरत्नसंवत्सरादिषु नियमोऽपि, एतावदेव तपः कर्त्तव्यं नाधिकमितिनियमः,न क्वापि केनाप्युक्त इति गाथार्थः ॥८६॥ अथ गाथाचतुष्टयेन वृद्धाभिप्रायमाह—

अहवा सिक्खचउक्के पडिनिअयदिणंमि अंतिमं जुअलं। इअ हरिभद्दप्पमुहाण वयं सिद्धंतसुपसिद्धं ॥८६॥

तत्थ पडिनिअसद्दो विवक्खिअत्थाण वायगो होइ। सावि विवक्खा दुविहा निअमानिअमेहिं णायव्वा ॥८७॥

णिअमेणऽट्ठमिपमुहा अणिअमेणेअरासु अ तिहीसु। तेणं न प्पडिदिवसाचरणीआ निअमपडिसेहो ॥८८॥

अथवेति वृद्धवादाभिप्राये, शिक्षाचतुष्के-शिक्षाव्रतचतुष्टये प्रतिनियतदिनेऽतिमं युगलं-पौषधातिथिसंविभागलक्षणमिति-अमुना प्रकारेण हरिभद्रप्रमुखाणां वचः सिद्धान्तसुप्रसिद्धं-सिद्धान्ते श्रीआवश्यकवृत्त्यादिलक्षणेऽतिप्रसिद्धमिति गाथार्थः ॥ ८६ ॥ तत्र 'पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयावि'त्यत्र प्रतिनियतशब्दो विवक्षितार्थानां वाचको भवति, साऽपि विवक्षा

द्विविधा, काभ्यां ?—नियमानियमाभ्यां ज्ञातव्या, एका नियमेन विवक्षाऽपराऽनियमेन विवक्षा चेति गाथार्थः ॥८७॥ अष्टमीप्रमुखासु तिथिषु नियमेन—अकरणे प्रायश्चित्तसंभवान्निश्चयेन पौषधः कार्यः, इतरासु च—प्रतिपदादिषु चानियमेन—अनिश्चयेनेति, तेन कारणेन न प्रतिदिवसाचरणीयाविति नियमप्रतिषेधो बोध्य इति गाथार्थः ॥८८॥ अथ दृष्टान्तवाक्यमाह—

जह साहूणं दाउं भुंजिज्ज सुसावओ न इअराणं। अहव दिवबंभयारी न य रत्तिमभिग्गहो अम्हं ॥८९॥

सुश्रावकः साधुभ्यो दत्त्वैव भुञ्जीत, नेतरेभ्यः श्रावकादिभ्यः, अत्र श्रावकेभ्यो दत्त्वैव भुञ्जीतेतिनियमनिषेधो, न पुनस्तद्दाननिषेधः, तथा दृष्टान्तान्तरमाह—'अहव'त्ति अथवा दिवसे ब्रह्मचारी न च रात्रिमिति, रात्रिमङ्गीकृत्य दिवा ब्रह्मचारी न रात्रावित्यर्थं इत्यभिग्रहोऽस्माकमिति ब्रुवाणस्य श्रावकस्य न रात्रौ ब्रह्मचारित्वनिषेधः संपन्नः, किंतु नियमाभावः, अन्यथाऽवश्यमब्रह्मसेवनं प्रसज्येत, तच्च प्रवचनेऽत्यन्तं निन्द्यमित्येवं दृष्टान्तद्वयेनाष्टम्यादिषु नियमेनान्यासु चानियमेनेति पौषधोऽभ्युपगन्तव्यः, अत एव सुबाहुप्रभृतीनां त्रयः पौषधा विपाकश्रुताङ्गे भणिता लभ्यन्ते, तथाहि—"तए णं से सुबाहुकुमारे अण्णया चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु जेणेव पोसहसाला तेणेव उवा०२ पोसहसालं पमज्जति उच्चारपासवणभूमिं पडि०२ दब्भसंथारयं संथारेति दब्भसंथारयं दुरूहति२ अट्ठमभत्तं पगेण्हति२ पोसहसालाए पोसहिए अट्ठमभत्तिअं पोसहं पडिजागरमाणे२ विहरति"त्ति श्रीविपाकश्रुताङ्गे, तथा नवपदप्रकरणेऽन्यतिथिसंविभागानियम उक्तः, तथाहि—"अयं च यद्यपि श्रावकेण सदा कर्त्तव्य एव, यदुक्तं—"पइदिणं भत्तपाणेण, ओसहेण तहेव य। अणुगहेह मे भयवं, सावए उ निमंतए॥१॥" गृहं प्रविष्टे च साधावयं विधिर्यथा "गिहिमागयस्स साहुस्स, आसणं निअमओ य दायव्वं। वंदिअ सयं विअरइ अहवा अण्णं दवावेइ ॥२॥" इत्यादि, तथापि पौषधोपवासपारणकेऽवश्यं साधुसंभवेऽमु

कृत्वा भोक्तव्यम्, अन्यथा त्वनियमं इति नवपदवृत्तौ इति गाथार्थः ॥८९॥ अथ दूषणान्तरमाह—

**किंच मुणिसंविभागो नवमीपडवासु चेव नऽण्णासु। चउपव्वी तवपोसहगहिआ कह पक्खिअंते सो?॥९०॥**

किंचेति दूषणाभ्युच्चये, खरतरमतेऽतिथिसंविभागो नवमीप्रतिपदोरेव तिथ्योः संपद्यते, नान्यासु तिथिषु, यतश्चतुष्पर्वी तपःपौषधगृहीता—चतुर्थादितपःसमन्विता पौषधनियता, तथा च कथं पाक्षिकान्ते—पाक्षिकपारणके पूर्णिमामावास्ययोः 'सो'त्ति अतिथिसंविभाग इत्यक्षरार्थः, भावार्थस्त्वयं—पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयावित्यागमबलेन चतुष्पर्व्यामेव पौषधो जिनाज्ञा, नान्यास्विति खरतरकृतं, तत्रेदं प्रष्टव्यं—भोः खरतर! प्रतिनियतदिवसशब्देन चतुष्पर्व्येवोच्यते उत यथासंभवदिवसो वा?, आद्येऽतिथिसंविभागोऽष्टम्यादिषु तिथिष्वेव कर्त्तव्यः स्यात्, नवम्यादौ तु चतुष्पर्वीत्वाभावाद्, द्वितीये पौषधिकानां भोजनानङ्गीकारेण चतुष्पर्व्यां चतुर्थादितपःसमन्वितः पौषधः, अतिथिसंविभागस्तु तत्पारणक एवेति नियमे सिद्धे प्रतिपन्नवमीभ्यामतिरिक्तासु तिथिष्वतिथिसंविभागो न जिनाज्ञेति संपन्ने कथं पूर्णिमायाममावास्यायां वाऽतिथिसंविभागः कार्यते?, पौषधमधिकृत्य यथा प्रतिपद्द्वितीयाद्याश्चिन्त्यास्तथाऽतिथिसंविभागमधिकृत्य पूर्णिमामावास्ये अपि, तस्माद्यथा श्रीआवश्यकचूर्ण्यादौ पौषधिकानां पारणके नियमेनातिथिसंविभागोऽन्यत्र त्वनियमेन तथा पौषधोऽप्यष्टम्यादिषु नियमेन शेषतिथिष्वनियमेनेति गाथार्थः ॥९०॥ अथ पुनरपि न्यूनमुत्सूत्रमाह—

**जं भोअणपडिसेहो पोसहिआणं तमूणमुस्सुत्तं। भुत्तिजुअपोसहाणं जिणभणिआणं तु पडिसेहो ॥९१॥**

यत्पौषधिकानां भोजनप्रतिषेधस्तदूनमुत्सूत्रं भवति, अथोनत्वं व्यक्तीकरोति—'भुत्ति'त्ति यतो भुक्तियुक्तानां—भोजनसंयुक्तानां पौषधानां जिनभाषितानां तुरप्यर्थे जिनोक्तानामपि निषेधः, स न्यूनमुत्सूत्रमिति गाथार्थः ॥९१॥ पौषधिकानां भोजने युक्तिमाह—

चाउद्दसट्ठइवाइ आगमुत्ते अ पुण्णिमाइदिणे । केवलपोसहवयणं तवनिअमो चउदसीइ दिणे ॥९२॥

'चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा विहरंती'ति प्रवचनोक्ते पूर्णिमादिने उपलक्षणादमावास्यायां केवलपौषधवचनं भणितं, चतुर्दशीदिने च तपोनियमश्चतुर्थलक्षणं तपोभणितम्., अर्थात्पूर्णिमायाममावास्यां च भोजनमेव संपन्नम्, अन्यथा पाक्षिके चतुर्मासकवत् षष्ठतप एवोक्तमभविष्यत्, तच्च नोक्तम्, अतः पौषधिकानां भोजनं सिद्धमपि प्रतिषेधयतो जिनदत्तस्य न्यूनमुत्सूत्रमिति गाथार्थः ॥९२॥ अथ ग्रन्थसम्मतिमाह—

सावयपडिकमणाईचुण्णिप्पमुहेसु भोअणं भणिअं । पौसहिआणं पोसहविहिपगरणमाइसुवि दिट्ठं ॥९३॥

श्रावकप्रतिक्रमणादिचूर्णिप्रमुखेषु पौषधिकानां भोजनं भणितं, तथा पोषधविधिप्रकरणादिषु च दृष्टं, पूर्वार्द्धे भणितमितिशब्देन चरितार्थत्वेऽपि यदत्र पृथक् दृष्टमिति भणितं तत्पौषधविधिप्रकरणे विधिप्रपायां च घुणाक्षरन्यायेन यथार्थं पतितमित्यनादरसूचनार्थं बोध्यं, यथा भणितं तथा चाह "तत्थ जइ देसओ पोसहिओ सो भत्तपाणस्स गुरुसमक्खं पारावित्ता आवस्सिअं करेत्ता इरिआसमिओ गंतुं घरे ईरिआवहिअं पडिक्कमइ आगमणमालोअणं करेइ, चिइवंदणं, तओ संडासे य पमज्जेत्ता पाउंछणगे निसीअइ, भायणं पमज्जइ, जहोचिए भोअणे परिवेसिए पंचमंगलमुच्चरेइ, तओ वयणं पमज्जित्ता असुरसुरं अचवचवं अदुयमविलंबिअं अप्परिसाडिं मणवयणकायगुत्तो भुंजइ साहुव उवउत्तो. जायाए मायाए वा भोचा फासुअजलेण मुहसुद्धिं काउं नवकारसरणेण उट्ठाणं, देवे वंदेइ, दणं दाउं संवरणं काउं पुणोऽवि पोसहसालाए गंतूण सज्झायंतो चिट्ठइ" त्ति श्राद्धप्रतिक्रमणसूत्रचूर्णौ, तथा "चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीए पव्वं मासस्स अट्ठमि पक्खस्स उद्दिट्ठा—अमावसा पुण्णिमा इति चन्द्रमाः पूर्णमा-

गम्य तस्वेयं पूर्णिमा, पडिपुण्णं पोसहंति आहारपोसहादि, पोसहिओ पारणे अवस्सं साहूण भिक्खं दाऊण पारेंति, तेनोच्यते समणे निग्गंथे फासुएसणिज्जं असणं४ पडिलाभेमाणे विहरती"ति श्रीसूत्रकृदङ्गचूर्णौ, अत्राहारपौषधिकस्य पारणं भणितं, तच्च पूर्णिमाऽमावास्योर्दिने संभवति, यतोऽत्रैव पङ्क्तिदशकोपरि—"अयमाउसो निग्गंथे पावयणे अट्ठे सेसे अणट्ठे जम्हा एवं प्रतिपद्यते तम्हा उस्सियफलिहा जाव पवेसा, जम्हा एवं तम्हा चाउद्दसट्ठमीसु० तम्हा पारणए समणे निग्गंथे, तेणं एआरूवेण विहारेणं विहरमाणे बहूणि वासाणि प्राप्नुवंतीति चतुर्दश्यष्टम्योस्तप उक्तं, पारणकं तदुत्तरदिवस एव स्यात्, न च दिनः पौषधसंयुक्तः पूर्णिमाऽमावास्या वा स्यादिति स्वयमेव पर्यालोच्यं। तथा "जे भिक्खू असणादी दिज्जा गिही अहव अण्णतित्थीणं। सो आणाअणवत्थं मिच्छत्तविराहणं पावे ॥ जुत्तमदाणमसीले कडसामइओ उ होइ समण इव। तस्समजुत्तमदाण चोअग! सुण कारणं तत्थ ॥२॥ कामी सघरंगणओ थूलपइण्णा सि होइ दट्ठव्वा। छेअणभेअणकरणे उद्दिट्ठकडंपि सो भुंजे ॥३॥ इति श्रीनिशीथभाष्ये, जं च उद्दिट्ठकडं कडसामइओवि भुंजइ, 'एवं सो सव्वविरओ भवति, एतेणं कारणेण तस्स न कप्पइ दाउंति श्रीनिशीथभाष्यचूर्णौ उद्दे० १५, तथा 'नं सचिओ करिज्जा तवो उ जो वण्णिओ समणधम्मे। देसावगासिएणं जुत्तो सामाइएणं वा ॥१॥ इयं गाथा श्रीआवश्यकचूर्णौ पौषधाधिकारेऽस्तीति बोध्यम्. अथ यथा दृष्टं तथा चाह—जो पुण आहारपोसही देसओ सो पुण्णे पच्चक्खाणे तीरिए अ खमासमणदुगेण मुहपुत्तिं पडिलेहिअ खमासमणेण वंदिअ भणइ-इच्छाकारेण संदिसह भत्तं पारावेह पोरसि पुरिमड्ढं चउविहार एकासणं निव्वीअमायंबिलं वान्यं, जा कावि वेला ताए पारावेमि, तओ सक्कत्थएण वि चेइए वंदिअ सज्झायं सोलस वीसं वा सिलोगे काउं जहासंभवमतिथिसंविभागं दाउं मुहहत्थपाए पडिलेहिअ नमुक्कारपुव्वमरत्तदुट्ठो भुंजइ, भणिअं च—"रागद्दोसविरहिआ वणलेवाइ-

उवमाए भुंजंति। कइढितु नमुक्कारं विहीएँ गुरुणा अणुण्णाया ॥१॥" इत्यादि जिनवल्लभकृतपौषधविधिप्रकरणे, अत्रोपधानवाहिपौषधविधिरयं न पुनः पौषधव्रतव्रतामपीति कश्चिद्वाचालो ब्रूते, तन्मुखव्रणपाचनहेतवे तद्योग्यविधिप्रपैव यथा—"तओ जइ पारणइत्तओ तो पच्चक्खाणे पुण्णे खमासमणदुगेण पुव्वं मुहपोत्तिं पडिलेहिअ वंदिअ भणइ-भगवन् ! भातपाणी पारावेह, उवहाणवाही भणइ—नमुक्कारसहिअं चउविहारं,इअरो भणइ—पोरसिं पुरिमड्ढं वा तिविहाहारं एकासणं निव्वीअं अंबिलं वा जा कावि वेला तीए भत्तपाणं पारावेमि"त्ति इत्यादिखरतरपेयपानीयप्रपायामिति, अत्रोपधानवाही पौषधिको भिन्न एवोक्तः,अतस्तत्पौषधविधिप्रकरणे यद्योजनं तत्सामान्येनैव बोध्यमितिगाथार्थः ॥९३॥ अथ पुनरपि तथाह

सावयपडिमाधम्मो वुच्छिण्णो दूसमाणुभावाओ। इअ दुज्जणदुव्वयणं अणंतभवकारणं णेअं ॥९४॥

दुष्षमानुभावतः-पञ्चमकालमाहात्म्यात् श्रावकप्रतिमाधर्मो "दंसणवयसामाइअपोसहपडिमाअबंभसच्चित्ते। आरंभपेसउद्दिट्ठवज्जए समणभूए अ॥१॥"त्ति गाथोक्तैकादशप्रतिमालक्षणो व्युच्छिन्न इति दुर्जनदुर्वचनमनन्तभवकारणम्-अनन्तभवभ्रमणहेतुरितिगाथार्थः ॥९४॥ अथहेतुमाह—

जण्णं दूसमसमए सावयपडिमाण पालगो जोग्गो। उस्सग्गेण चरित्ते पंचासयवित्तिवयणंति ॥९५॥

यद्—यस्मात् णमित्यलङ्कारे दुष्षमासमये उत्सर्गेण—मुख्यवृत्त्या श्रावकप्रतिमापालकश्चारित्रे योग्यः पञ्चाशकोपाये,श्रीहरिभद्रसूरिकृतपञ्चाशकवृत्तौ भणितः, तथाहि—"जुत्तो पुण एस कमो ओहेणं संपई विसेसेण। जम्हा असुहो कालो दुरणुचरो संजमो एत्थ ॥१॥ अस्या वृत्तिः- 'जुत्तो'गाहा, यद्यपि क्रमान्तरेणापि प्रव्रज्या स्यात् तथापि युक्तः—संगतः पुनरितिविशेषणार्थः एषः—अनन्त-

गेन्कः प्रतिमानुष्ठानादिक्रमः प्रव्रज्याप्रतिपत्तौ परिपाटिः, कथमित्याह "ओघेन' सामान्येन, न तु सर्वथैव, तद्विनापि बहूनां प्रव्रज्याश्रवणात, कालापेक्षया विशेषमाह–साम्प्रतं–वर्तमानकाले विशेषेण–विशेषतो युक्त एव क्रमः,कुत एतदेवमित्याह–यतः कारणादमुमः–अशुभानुभावः कालो दुष्षमालक्षणो वर्तते,ततश्च दुरनुचरो–दुःखासेव्यः संयमः–संयतत्वमत्र–अशुभकालेऽतः प्रव्रजितुकामेन प्रतिमाभ्यासो विधेय इतिमात्र इति गाथार्थः॥ तन्त्रान्तरप्रसिद्ध्या प्रतिमापूर्वकत्वं प्रव्रज्यायाः समर्थयन्नाह–तंततरेसुवि इमो आगममेओ पसिद्धओ चेव। ता इह जइअव्वं खलु भवविरहं इच्छमाणेहिं॥१॥ति, अस्या वृत्तिः–तन्त्रान्तरेष्वपि–दर्शनान्तरेष्वपि, आस्तां जैनप्रवचने अनन्तरोक्तः आश्रमभेदो–भूमिकाविशेषो 'ब्रह्मचारी गृहस्थश्च,वानप्रस्थो यतिस्तथे'त्यादिनोक्तस्वरूपः इउत्ति पाठान्तरं तत्र इतः–अशुभकालदुरनुचरसंयमलक्षणाद्धेतुद्वयाद् अथवा इतो–जैनप्रवचनात्तन्त्रान्तरेष्विति,प्रसिद्धकथैव–सिद्ध एव,न तु साध्यो, यस्मादेवं तत्–तस्मादित्युक्तन्यायेनेह प्रतिमापूर्वे या प्रव्रज्यायां यतितव्यं–यत्नो विधेयः,भवविरहं–संसारवियोगमिच्छद्भिः–वाञ्छद्भिर्निखिलशास्त्रप्रवरपारगतागमावलम्बिभिरिति गाथार्थः॥९५॥ अत्र दुष्षमाकाले विशेषतः प्रतिमापूर्वकमेव चारित्रप्रतिपत्तिरुक्ता, तेन यः कश्चित् "माहणं गोअरओ वुच्छिन्नो दूसमाणुभावाओ। अज्जाणं पणवीसं सावयधम्मो अ वुच्छिन्नो॥१॥"त्ति गाथायां श्रावकधर्मश्चात्र प्रतिमारूपो ज्ञेय इति काल्पनिकमर्थमुद्भाव्य मुग्धान् व्युद्ग्राहयति सोऽपि प्रतिक्षिप्तो बोध्यः,एवंविधस्यार्थस्य क्वाप्यागमेऽनुपलम्भादितिगाथार्थः ॥९५॥ अथ पुनरपि न्यूनमुत्सूत्रमाह—

समणाणं समणीहिं गामाणुग्गामविहरणं न सुहं। इअ उवएसी पवयणमेराओ दूरओ णेओ ॥९५॥

श्रमणीभिः साध्वीभिः सह श्रमणानां-निर्ग्रन्थानां ग्रामानुग्रामविहरणं-ग्रामानुग्रामविहारकरणं न शुभमित्यमुना प्रकारेणोपदेशवचनं

प्रवचनमर्यादातो दूरतो दूरे ज्ञेयमितिगाथार्थः ॥९६॥ अथ साध्वीभिः सह साधुविहारे सम्मतिप्रदर्शनाय गाथामाह—

ठाणायारप्पमुहे निसीहभासाइछेअगंथे वा। साहूण साहुणीहिं समं विहारो जिणाणाए ॥९७॥

स्थानाचारप्रमुखे—स्थानाङ्गाचाराङ्गप्रमुखे निशीथभाष्यादिच्छेदग्रन्थे वा साधूनां साध्वीभिः समं विहारो जिनेनानुज्ञातः, यथाऽनुज्ञातस्तथा चाह—"पंचहिं ठाणेहिं समणे निग्गंथे निग्गंथिं गेण्हमाणे वा अवलंबमाणे वा णाइक्कमति, तंजहा—निग्गंथिं च णं अण्णयरे पसुजाइए पक्खिजाइए वा ओघाएज्जा तत्थ निग्गंथे निग्गंथिं गिण्हमाणे वा अवलंबमाणे वा णाइक्कमति१, निग्गंथे निग्गंथिं दुग्गंसि वा विसमंसि वा पक्खलमाणिं वा पवडमाणिं वा गेण्हमाणे वा अवलंबमाणे वा णाइक्कमति २, निग्गंथे निग्गंथिं सेतंसि वा पंकंसि वा पणगंसि वा उदगंसि वा उक्कसमाणीं वा उज्झमाणीं वा गेण्ह० अव०णाति० ३, निग्गंथे निग्गंथिं आरुहमाणे वा ओरुभमाणे वा णाइक्कमति ४, खित्तइत्तं दित्तइत्तं जक्खाविट्ठं जाव भत्तपाणपडिआतिक्खितं निग्गंथे निग्गंथिं गेण्हमाणे वा अवलंबमाणे वा णातिक्कमति ५, श्रीस्थानाङ्गे (४२७) एतद्वृत्तिर्यथा—'पंचहिं'मित्यादि सुगमं, नवरं 'गिण्हमाणे'त्ति बाह्वादावङ्गे गृह्णन् अवलम्बानः पतन्तीं बाह्वादौ गृहीत्वा धारयन्, अथवा 'सव्वंगिअं तु गहणं करेण अवलंबणं तु देसंमि'त्ति, नातिक्रामति स्वाचारमाज्ञां वा गीतार्थस्थविरो निर्ग्रन्थभावेन, यथा कथंचित् पशुजातीयो—हस्सगवादिः पक्षिजातीयो गृध्रादिः 'ओहाएज्ज'त्ति उपहन्यात् तत्रेति उपहनने गृह्णाति, नातिक्रामति, कारणिकत्वात्, निष्कारणत्वे तु दोषाः, यदाह—मिच्छत्तं उड्डाहो विराहणा फासभावसंबंधो। पडिगमणाई दोसा भुत्ताभुत्ते अ णायव्वा ॥५१॥ इत्येकं१, तथा दुःखेन गम्यते इति दुर्गः, स च त्रिधा—वृक्षदुर्गः श्वापददुर्गो म्लेच्छादिमनुष्यदुर्गः, तत्र दुर्गे, उक्तं च—"तिविहं च होइ दुग्गं रुक्खे१ सावय२ मणुस्स३ दुग्गं च"त्ति, तथा विषमे

वा—गर्त्तपाषाणाद्याकुले पतन्तं वा प्रस्खलिते वा गत्या प्रपतन्तीं वा भुवि, अथवा "भूमीए असंपत्तं पत्तं वा हत्थजाणुगादीहिं । पक्खलणं णायव्वं पडणं भूमीइ गत्तेहिं॥१॥"ति गृह्णन्नातिक्रामति द्वितीयं२,तथा पङ्कः पनको वा सजलो यत्र निमज्ज्यते स सेकस्तत्र वा, पङ्कः पनको वा—आगन्तुकप्रतनुद्रवरूपः कर्दम एव ओल्यां वा अपकसन्तीं—पङ्कपनकयोः परिल्हसन्तीं अपोह्यमानां वा—सेके उदके वा नीयमानां गृह्णन्नातिक्रामति.गाथा चेह—"पंको खलु चिक्खल्लो आगंतुं पतणुओ दवो पणओ। सुच्चिअ सजलो सेओ सीइज्जइ जत्थ दुविहेवि ॥१॥"त्ति,'पंकपणएसु नियमा ओकसणं वुज्झणं सिआ सेए। निमिअंमि निमज्जणया सजले सेए सिआ दोवि ॥१॥'त्ति तृतीयं३ तथा नावं 'आरुहमाणे'त्ति आरोहयन् 'ओरुहमाणे'त्ति अवरोहयन्नुत्तारयन्नित्यर्थो, नातिक्रामतीति चतुर्थं४, तथा क्षिप्तं—नष्टं रागभयापमानैश्चित्तं यस्याः सा क्षिप्तचित्ता तां वा, उक्तं च—"रागेण वा भएण व अहवा अवमाणिआ महंतेण। एतेहिं खित्तचित्त"त्ति, तथा दर्प—सन्मानाद्दर्पवच्चित्तं यस्याः सा दृप्तचित्ता तां वा, उक्तं च—इति एस असम्माणा खित्तो सम्माणओ भवे दित्तो। अग्गीव इंधणेणं दिप्पइ चित्तं इमेहिं तु ॥१॥ लाभमएणावि मत्तो अहवा जेऊण दुज्जयं सत्तुं"ति, यक्षेण—देवेनाविष्टा—अधिष्ठिता यक्षाविष्टा तां वा,अत्रोक्तं—"पुव्वभववेरिएणं अहवा रागेण रागिआ संती। एतेहिं जक्खइट्ठ"त्ति,उन्मादम्—उन्मत्ततां प्राप्ता उन्मादप्राप्ता तां वा, अत्राप्युक्तं—"उम्माओ खलु दुविहो जक्खाएसे अ मोहणिज्जे अ । जक्खाएसो वुत्तो मोहेण इमं तु वुच्छामि॥१॥ रूवंगं दट्ठूणं उम्माओ अहव पित्तमुच्छाइ"त्ति,उपसर्गम्-उपद्रवं प्राप्ता उपसर्गप्राप्ता तां वा,इहाप्युक्तं-"तिविहे अ उवसग्गे दिव्वे माणुस्सए तिरिक्खे अ। दिव्वे अ पुव्वभणिए माणुस्से आभिओगे अ॥१॥ विज्जाए मंतेण य चुण्णेण व जोइआ अणप्पवस"त्ति,सहाधिकरणेन साधिकरणा—युद्धार्थमुपस्थिता तां वा,सह प्रायश्चित्तेन सप्रायश्चित्ता तां वा, भावना चेह—अहिगरणंमि कयंमि

उ खामेउमुवट्ठिआ य पच्छित्तं । तप्पढमयाभग्गं होइ किलंता य वहमाणा ॥१॥" तथा भक्तपाने आभवं प्रत्याख्याते यया सा भक्तपानप्रत्याख्याता प्रत्याख्यातभक्तपाना वा तां, इह गाथा-अट्ठं वा हेउं वा समणीणं विरहिए कहितस्स । मुच्छाए वडिआए कप्पइ गहणं परिण्णाए॥१॥त्ति५। तथा अर्थः-कार्यमुत्प्रव्राजनतः स्वकीयपरिणेत्रादेर्जातं यया साऽर्थजाता पतिचौरादिना संयमाच्चाल्यमानेत्यर्थः तां वा, इह गाथा—अट्ठोरि जीए कर्ज संजायं एस अट्ठजाया उ। तं पुण संजमभावाच्चालिज्जंतं समवलंबे ॥१॥ति पञ्चममिति श्रीस्थानाङ्गवृत्तौ, तथा आचाराङ्गे यथा—"से भिक्खू वा भिक्खुणी वा आयरिअउवज्झाएहिं सद्धिं गामाणुगामं० आयरिअउवज्झायस्स हत्थेण हत्थं जाव अणासायमाणा ततो संजयामेव आयरिअउवज्झाए सद्धिं जाव दूतिज्जेज्जा वा" इत्यादि श्रीआचाराङ्गसूत्रे द्वितीयश्रुतस्कन्धे ईर्याध्ययने तृतीयोद्देशके, एतद्वृत्त्येकदेशो यथा साम्प्रतमाचार्यादिना सह गच्छतः साधोर्विधिमाह 'से' इत्यादि, स भिक्षुराचार्यादिभिः सह गच्छंस्तावन्मात्रायां भूमौ स्थितो गच्छेत् हस्तादिसंस्पर्शो न भवतीति आचा० वृत्तौ, अत्र यद्यपि भिक्षुणीशब्दः सूत्रोक्तोऽपि न व्याख्यातस्तथाऽप्यादौ व्याख्यातोऽत्रापि बोध्यः, प्रतिसूत्रं व्याख्याने वैयर्थ्यापत्तेः, अथ व्यक्त्या विहारविधिस्तु निशीथादिभ्यो यथाऽवगम्यः स्यात्तथा चाह—जे भिक्खू सगणिच्चिआए वा परगणिच्चिआए वा निग्गंथीए सद्धिं गामाणुगामे दूइज्जमाणे पुरओ गच्छमाणे पिट्ठओ रीयमाणे ओहयमणसंकप्पे चिंतासोगसागरं संपविट्ठे करयलपल्हत्थमुहे अट्टज्झाणोवगए विहारं करेइ जाव करितं वा साइज्जति" इति श्रीनिशीथसूत्रे उद्दे० ८, एतद्भाष्यं यथा—णिग्गंथीणं गणधरपरूवणा खित्तमग्गणा वसधी । सेज्जायरवीआरे गच्छस्स य आणणा दारा ॥१॥ पिअधम्मे दढधम्मे संविग्गे वज्जतो अ तेअंसी । संगहुवग्गहकुसलो सुत्तत्थविदू गणाधिपती ॥२॥ आरोहणपरिणाहो चितमंसो इंदिआइपडिपुण्णो । अह ओओ तेओ तेण होति अणोतप्पता देहे ॥३॥ खित्तस्स तु

पडिलेहा कायवा होति आणुपुव्वीए। किं वच्चति अ गणधरो? जो वहती सो तणं चरति॥४॥ संजतिगमणे गुरुगा आणादी सउणि-
पंमिपेहणया। तुच्छेणवि लोभणयाअतिआवणादी भवे दोसा॥५॥ तुच्छेणवि लोहिज्जइ भरुअच्छाहरणि निअडिसड्ढेणं। गंतनिमंत-
णवहणे चेतितरूद्दाण अक्खिवणा ॥६॥ एमादिकारणेहिं ण कप्पई संजईण पडिलेहा। गंतवं गणहरेणं विहिणा जो वण्णितो पुव्विं
॥७॥ गुत्ता गुत्तदुवारा कुलपुत्ते सत्तमंतगंभीरे। भीतपरीसहदवित्ते अज्जासिज्जातरो भणितो ॥८॥ घडकुड्डा सकवाडा सागारिअ
भगिणिमातपेरंता। निप्पच्चवायजोग्गा विच्छिन्नपुरोहडा वसधी॥९॥ णासन्ननातिदूरे विहिणा परिणतवताण पडिवेसे। मज्झत्थऽविकारा-
णं अकुऊहलमाविआणं च॥१०॥ भोई मयहरमाई बहुसयणो वित्तको कुलीणो य। परिणयवया अभीरू अणभिग्गहिओ अकोहल्लो॥११॥
थीआरे नउगुरुगा अंतोऽविअ तविवज्जिअचेव। नतिगंवि जत्थ पुरिसा उविंति वेसित्थिआओ अ ॥१२॥ जत्तो दुस्सीला खलु वेसि-
त्थिणपुंसहट्ठतेरिच्छा। सा तु दिसा पडिकुट्ठा पढमा वितिआ चउत्थीआ॥१३॥ चारभडवोडमिंठा सालगतरुणा य जे अ दुस्सीला। उ-
ब्भामित्थीवेसिअ अपुमेसु अ पंति तु तदट्ठी॥१४॥ हेट्ठउवासणहेउं णेगागमणंमि गहणउड्डाहो। वाणरमक्कडहंसा छगलगसुणगाति
तेरिच्छा॥१५॥ जइ अंतो वाघातो बहिं तासिं ततिअवा अणुण्णाय। सेसा णाणुण्णाया अज्जाण विआरभूमीओ॥१६॥ पडिलेहिअं न खित्तं
गंतव्वगस्स आणणा होइ। णिक्कारण मग्गंतो कारण पुरतो व समगं वा॥१७॥ णिप्पच्चवायसंबंधिभाविते गणधरप्पवितिततिओ। असति
मए पुण सत्थेण नदि कयकरणसहितो वा॥१८॥ उभयट्ठाइनिविट्ठे मा पेल्ले समणि तेण पुरतो ता। तं तु ण जुज्जति अविणयविरुद्धभमयं
न नयणाए॥१९॥ इति श्रीनिशीथभाष्ये ऽष्टमोद्देशके, एतच्चूर्णिर्यथा—'जे भिक्खू सगणेच्चिआए वे'त्यादि, इआणिं खेत्तसंकमणेत्ति
दारं. 'निग्गंथीण' गाहा. एरिसो संजतीगणहरो भवति. 'पिअधम्मे णामेगे णो दढधम्मे एवं चउभंगो, ततिअभंगिल्लो गणधरो.

संविग्गो दवे भावे अ, दवे मिगो, भावे साहू संसारभउविग्गो, मा कओवि पमाएण छलिजिहामित्ति सततोवउत्तो अच्छति, वज्जं-पावं तस्स भीरू 'उअतेअस्सि'त्ति 'आरोह' गाहा उस्सेहो आरोहो भणति, वित्थारो परिणाहो भणति, एए जस्स दोऽवि तुल्ला उवचिअमंसो-वलीअसरीरो, इंदिअपडिपुण्णो णो विगलिंदिओ, न चक्खुविगलादीत्यर्थः, 'अहो'ति एस ओओ भणति, तेओ जो सरीरे अणोतप्पता 'त्रपौषि लज्जायाम्' अलज्जनीय इत्यर्थः, वत्थाईएहिं जो संगहकारो, ओसहभेसज्जेहिं उवग्गहपरो, क्रियापरो कुसलो, सुत्तत्थे जाणंतो विदू भण्णाति, एरिसो गणाधिपती भण्णाति, गणधरप्ररूपणेति दारं गयं। इआणिं खेत्तपेहणेतिदारं 'खित्तस्स उ' गाहा, खेत्तपडिलहणक्रमो जो सो चेव आणुपुवी संजतीण खेत्तं संजतेहिं पडिलेहिअवं, णो संजतीहिं, तत्थवि गणधरेण, 'चोअग आह-किं वच्चति गणधरो ?, उच्यते, जो वहति सो तणं चरति, एवं जो गणभोगं भुंजति, ततो आयरिअस्स चउगुरुं आणाइआ य दोसा, जहा सगुणी वीरल्लसउणस्स गम्मा भवति एवं ताओवि दुट्ठगम्माउ भवंति, सबस्स अभिलसणिज्जा भवंति, मंसपेसि-अव विसयत्थीहिं पेल्लिज्जंति, तुच्छं-स्वल्पं तेणवि लोभिज्जंति आसिआवणं-हरणं एवमादिदोसा भवंति 'तुच्छेणवि' गाहा, मरुअ-च्छे रूववतीओ संजतीओ दट्ठुं आगंतुगवणियओ निअडिअसड्ढत्तणं पडिवण्णो, विसंभिसा, गमणकाले पवत्तिणिं विण्णवेति, वहणठाणे मंगलठाणं, ताहं निवत्तेमि, संजईओ पट्ठवेह, पट्ठविआ, वहणे चेइवंदणट्ठा आरूढा, पयट्टिअं वहणं अक्खिवणंति, एवं हरणदोसा भवंति, 'एवमादि' गाहा, पुवंति ओहनिज्जुत्तीए दारं, इयाणिं वसहिसिज्जायरेत्ति दो दारा 'गुत्ता गुत्तदुवारा' गाहा, वतीपरिक्खित्ता गुत्ता, जस्स कवाडं अत्थि सा गुत्तदुवारा, 'घणकुड्डा' गाहा, पक्किट्टिगादि घणकुड्डा, सह कवाडेण सकवाडा, सेज्जा-यरमाउभगिणीणं जे धरेति संजतिवसहीए पेरंतेण ट्ठिआ दुट्ठतेणगादि पच्चवाया णत्थि, महन्तपुरोहडा य 'णासन्न'गाहा, विहवा-डारं

पणइंना—परिणयवया मज्झत्थत्ता ण कंदप्पसीला गीआदिविकाररहिआओ संजईणं भोअणादिकिरिआसु अकोउआ धम्मेण साहु-माईणंपि भाविआ, एरिसा पडिवेसवासिणीओ, वसहित्तिगयं, इआणिं सिज्जायरेत्ति दारं, 'कुलपुत्ते'ति तिण्णि दारा पढिअसिद्धा, सो अ इमो 'भोग' गाहा, सत्तमंतो महंतमवि पओअणं अज्झवसति, उप्पण्णे पुण पओअणे अभीरू अणभिग्गहिअमिच्छत्तो सेसं कंठं, दारं, इआणिं विआरेत्ति,अणावायमसंलोगादी चउण्हं भंगाणं तेसिं कयमो पसत्थो ?,तेसिं किं विआरभूमी अंतो पसत्था बाहिं पसत्था ?,भण्णति–'वीआरे' गाहा, उस्सग्गेणं संजईणं अंतो विआरभूमी, जइ त्ताहिं विआरभूमिं गच्छति तो आयरिअस्स चउ-गुरू, अंतो ततिअभंगे अणुण्णायं, तत्थवि त्थीआवायं अंतो, विसेसभंगेसु चउगुरुं, ततिएवि जइ पुरिसा आवायंति वेसित्थिआओ अ तहावि चउगुरुं, 'जत्तो उ' गाहा, परदारगमिगामी दुस्सीला, हेट्ठोवासण हेउं जत्थ लोहकरा धायंति, जत्थ य वानराइ तिरिआ वद्धा निट्ठंति, जत्थ य इमे उवेन्ति, 'चारभडा' गाहा, पंचालचड्डाइ घोडा सालातुरगपरिअट्टगा उब्भामगवेसित्थिग अपुमेसु अ तद्दिणो अण्णे आगच्छंति, 'हेट्ठ'त्ति अस्य व्याख्या–'हेट्ठ उ' गाहा, गुज्झप्पदेसोवासणहेउं ते जइ उदिण्णमोहा संजतिं गेण्हंति तो उड्डाहो, 'तेरिच्छ'त्ति अस्य व्याख्या–वाणरपच्छदं, एए किल इत्थिअं अभिलसंति। 'जइ अंतो' गाहा,बहिआवि अ इत्थिआ-वातो तइयभंगो तो अणुण्णाओ। दारं। इआणिं गच्छस्स आणणंतिदारं,'पडिलेह' गाहा,जया खेत्ताओ खेत्तं संजतीओ संचारेजंति तदा निब्भए निरावाहे साहू पुरओ थिआ ताओ अ मग्गओ थिआ आगच्छंति, भयादिकारणे पुण साहू पुरओ मग्गतो पक्खा-पक्खिअं वा समंतओ वा ठिआ गच्छंति, 'निप्पच्च' गाहा, संजईणं संबंधिणो जे संजया तेहिं सहितो गणधरो अप्पवितिओ अप्पततिओ वा णिप्पच्चवाए णेति, सप्पच्चवाए सत्थेण सद्धिं णेति, जो वा संजओ सहस्सजोही ईमच्छे वा कयकरणो

तेण सहितो णेति, 'उभयट्ठा'गाहा एगे आयरिआ भणंति-पुरओवि अ संजतीतो गच्छंतु, किं कारणमाह-काइअसन्ननिविट्ठं संजइं मा वइणो पेच्छेहिन्ति, सा वा वइणं, तम्हा पुरओ गच्छंतु, तं ण जुज्जति, कम्हा?,तासिं अचिणओ भवति लोगविरुद्धं च,तम्हा उभयं जयणाए करेज्जा,का जयणा?, जत्थ एगो काइअं सण्णं वा वोसिरिति तत्थ सबे निसिरंति तत्थ सबे चिट्ठंति,ताओवि चिट्ठिए दट्ठुं मग्गओ चेव चिट्ठंति,ताओवि पि ओ सरीरचिंतं करेंति,एवं दोसा ण भवंति। श्रीनिशीथचूर्णीयष्टमोद्देशके। अत्र सामान्येन साध्वीभिः सह साधुविहारविधिरुक्तः॥ अथ मार्गे वस्त्रापगमे गमनविधिमाह-दुहतो वाघाओ पुण चउत्थभंगंमि होति णातवो। एमेवय परपक्खे पुवे अवरंमि अ पदंमि॥१॥ दुहतो वाघायं ता पुरतो समणा तु मग्गतो समणी। खुड्डेहिं भणावेती कज्जे देअं च दावेंति ॥२॥ समणाणं जो उ गमो अट्ठहि सुत्तेहिं वण्णितो एसो। सो चेव निरवसेसो वोचत्थो होइ समणीणं ॥३॥ इति श्रीनिशीथभाष्ये उ० ११। एतच्चूर्णिर्यथा 'दुहतो वा' गाहा, पुबद्धं कंठं,पक्खे गिहत्थिअणातितित्थिणीते, तेसु एवं चेव चउभंगो, दोसा य वत्तवा, एगतरे उभयपक्खे वा वित्ते वत्थाभावे खंडपत्तदब्भचीवरहत्थपिहाणादि जयणा कायवा, सावयभयादिसु अ संजईओ मज्झे छोढुं ठाणादी चेदेज्ज, दुहतोवि अचेलाणं पथे इमो गमणविही-'दुहतो वा'गाहा, अग्गतो साहू गच्छति पिट्ठतो समणीतो, जदि संजतीतो किंचि वत्तवा तो खुड्डगेहिं भणावेति,जं किंचि देअं तंपि खुड्डगेहिं चेव दवावेंती,सभए पुण पिट्ठतो अग्गतो पासतो वा संजया गच्छंति, न दोसो, वितिअचउत्थेसु भंगेसु सवपयत्तेण संजईण वत्था दायवा,समणाणं गाहा, चउरो संजतिसुत्ता चउरो गिहत्थन्नतितित्थिणो सुत्ता,एए अट्ठ,संजताणवि संजएसु चउरो सुत्ता गिहत्थन्नतितित्थिएसु चउरो,एसेव विवच्चासो दोसा य वत्तवा निशीथचूर्णावेकादशोद्देशके ११,इति मार्गगमने स्तेनादिना वस्त्रापगमने गमनविधिः। आदिशब्दाद् बृहत्कल्पादिर्यथा 'से गामंसि वा

जाव गामप्पहांणिमि वा सपरिक्खेवंमि अबाहिरिअंसि कप्पइ निग्गंथीणं हेमंतगिम्हेसु दो मासा वत्थए" त्ति श्रीबृहत्कल्पसूत्रम्, एत-
द्भाष्यं यथा—एसेव कमो निअमा निग्गंथीणंपि होति णायव्वो । जं इत्थं णाणत्तं तमहं वोच्छं समासेणं ॥१॥ निग्गंथीणं गणहर परूवणा
खित्तमग्गणा चेव । वसही विहार गच्छस्स आणणा वारए चेव ॥२॥ भत्तट्ठाए अ विही पडणीए भिक्खणिग्गमे चेव । निग्गं
थीणं मासो कम्हा नासिं दुवे मासा ? ॥३॥ पिअधम्मे दढधम्मे संविग्गे वज्ज उअतेअंसी । संगहुवग्गहकुसलो सुत्तत्थविऊ गणाधिपती
॥४॥ आरो० ॥५॥ खित्तस्स० ॥६॥ संजति० ॥७॥ तुच्छेण० ॥८॥ एएहिं० ॥९॥ जत्थाधिवती सूरो समणाणं सो अ जाणइ वि-
सेसं । एआरिसंमि खित्ते अज्जाणं होइ पडिलेहा ॥१०॥ गुत्ता गुत्त० ॥११॥ घणकु० ॥१२॥ नासन्न० ॥१३॥ भोइमहत्तरगादी बहुसयणो
पिल्लओ कुलीणो अ । परिणयवओ अभीरू अणभिग्गहिओ अकुतूहली ॥१४॥ कुलपुत्त सत्तमंतो भीअपरिस भद्दओ परिणओ अ । धम्मट्ठी-
ओ (भद्दो) अज्जासेज्जायरो भणिओ ॥१५॥ अणावायमसंलोगा आवाया चेव होइ संलोगा । आवायमसंलोगा आवाया चेव संलोगा ॥१६॥
वीआरे० ॥१७॥ जत्तो दु० ॥१८॥ चारभ० ॥१९॥ हेट्ठा उवा० ॥२०॥ जइ अं० ॥२१॥ पडिले० ॥२२॥ णिप्पन्न० ॥२३॥ उभय० ॥२४॥
इति श्रीबृहत्कल्पभाष्यम्, एतच्चूर्णिर्यथा—'एसेव' गाहा कंठा, निग्गंथीणं दारगाथाद्वयं, तत्थ पढमं दारं निग्गंथीणं केरिसो गणहरो
ठवेअव्वो ?, तस्स परूवणा—'पिअधम्मे' गाहा, पिअधम्मे नामेगे णो दढधम्मे चउभंगो, ततिअभंगे ठविज्जति, ण य सेसो, संविग्गो दव्वे मिओ,
भावे जो पुव्वरत्तावरत्तं० मिलोगो, वज्जं-पावं तस्स भीरू ओअतेअस्सित्ति, 'आरोह' गाथा, आरोहो णाम नातिदीहो नातिमंडलो. परि-
णाहो णाम नातिथूलो नातितणुओ, अहवा आरोहो उच्चत्तं परिणाहो बाहुणं विक्खंभो, समचउरंससंठाणमित्यर्थः, चितमांसो नाम
णो पंसुलिआदीणि दीसंति, अणोतप्पता—देहेणि ओतप्पता निस्तेजत्वात्परिभूतत्वं अणोतप्पता तेजोयुक्तत्वादपरिभूतत्वं, "देहीनि

वदतो वार्णी, सैव देहीति याचतः । प्रहर्षोद्वेगजननी, श्राग्रध्यधरयोरिव ॥१॥" संगहो वत्थादीहि उवग्गहो णाणादीहिं, गणहर-
परूवणत्ति गतं,इआणिं खित्तमग्गणा,पडिलेहणा इत्यर्थः,'खित्तस्स य'गाहा तं पुण खेत्तं पडिलेहिअव्वं, किं संजतीओ गच्छंति उदाहु
संजया गच्छंति ?, उच्यते, 'संजतीगमणे'गाहा कंठा, जहा सउणीवंदे वीरल्लगो लीणो, अवंताओवि केणइ पुरिसेण सव्वाओऽवि
अभिभूयंते, जं वा रुच्चति तं करिज्जति, से जधा वा अंबपेसिआति वा सूत्रापकाः, पेल्लिज्जति वा पडिणीएणं, अविअ महिलाओ
तुच्छाओ आहारादिलोभेणं 'तुच्छेणवि' गाहा कंठा, 'एतेहिं' गाहा कंठा, आह—ता को वच्चति ?, उच्यते, गणधरो, जो चरति सो
तणं वहति; हत्थिस्स चारी हत्थी चेव समत्थो वहेउं एगसराए, एवं तस्स भरस्स गणधरो चेव समत्थो, अहवा जयहा हत्थिस्स
अण्णो चेव महिसादिणो आणेति, एवमिहावि गणहरो दुक्खणओ होज्जा तो अण्णो तग्गुण एव पडिलेहओ जाति. तं पुण केरिसं
खेत्तं ? 'जत्थाधि' गाथाद्वयं कंठं. 'वसही'ति तत्थ वसही केरिसा ?, गुत्ता—वतिपरिखित्ता कुड्डपरिखित्ता वा, गुत्तदुवारा सक-
वाडा, 'घणकुड्डा' गाहा कंठा, सिज्जायरो कुलपुत्तो सत्तमंतो जो ण केणवि खोभिज्जति, गंभीरो अचवलो, उच्चारपासवणारय-
णाए अंतो न किंचिवि भणंति 'ओभासण'त्ति एरिसो अज्जाण वसहिं ओभासिज्जति, दिण्णाए भण्णति—जइ चिंतेसि मए
धूआसुण्हाओ वा जहा सारक्खिअव्वाओ, जइ पडिवज्जति तो ठविज्जति, जइ अ अज्जाओ अब्भुवगच्छंति अण्णपरिवाडीए,
'णासण्ण'गाहा कंठा, 'भोइअ'गाथाद्वयं, सिज्जायरो एरिसो, अण्णपरिवाडीए 'विआरे'त्ति सण्णाभूमी, उस्सग्गेणं पुरोहडे विज्ज-
माणे असतिए हिण्डंति 'वीआरबहु' गाहा, पुरोहडे विज्जमाणे अ जइ गहिज्जत्ति,'अणावात'गाहा चउसुवि ४,अंतो विअत्ति वइणीओ
अब्भंतरे पुरोहडे ततिअथंडिलं आवाते असंलोगं वज्जेत्ता जति पढमे वितिए चउत्थे वा वोसरति, जो एस ततिआ अणुण्णाया,

साध्वीभिः सह विहारः

एयाणि तुलयाणं इत्थिआणं आउज्जाता असंलोगा सा ततिए पुव्वद्धं तत्थ विधवा, आह–किं पुण पढमं बीअं चउत्थं थंडिलं अंतो पडिसिद्धं, उच्यते–'जत्तो' गाहा, एतोवि अप्पसारिअंतिकाउं पढमबीआणि ओमाणी वच्चंति, दुस्सीला वेसित्थिणपुंसत्ति 'चारभड' पुव्वद्धं एते दुस्सीला. उन्मामइगमहिलाणं वेसित्थीणं नपुंसगाण य अद्धाए पढमबितिएसु थंडिलेसु एति घोडा चट्टा सोवगा परिअट्टा-एते दुस्सीला. हेट्ठावि हेट्ठाण्हाविता. तेसिं हेट्ठाउवासणं पुव्वद्धं तेसिं अप्पसारिअंतिकाउं पढमे थंडिलेसु गच्छंति, तेरिच्छंति वाणरपच्छद्धं, एते-वि उवसग्गंति, एवं अंतो गयं. 'जइ अंतो वाघाओ' गाथा कंठा, खेत्तमग्गणावसधीविआराणि गयाणि। इआणिं संजतीगच्छस्स आणत्ति-दारं। 'पडिलेहिअं च' गाथात्तयं कंठं, संबंधेत्ति आमच्चे भाविते, जतिणीगच्छस्स आणणत्ति गतं, इआणिं वारए चेवत्तिदारं इति श्रीबृहत्कल्पचूर्णौ ॥ अथ बृहत्कल्पवृत्तिर्लिख्यते सूत्रं 'से गामंसि वा' इत्यादिसूत्रं प्राग्वद्, अथ भाष्यविस्तरः 'एसेव०' व्याख्या एष एव निर्ग्रन्थसूत्रोक्त एव यः 'भिक्खायरिय' इत्यादिकः क्रमो नियमो निर्ग्रन्थीनामपि ज्ञातव्यो भवति, यत्पुनरत्र विहारद्वारे नानात्वं तदहं वक्ष्ये समासेन। प्रतिज्ञातमेव निर्वहति– निग्गंथीणं० भत्तट्ठा० व्याख्या–निर्ग्रन्थीनां यो गणधरो–गच्छवर्त्तापकस्तस्य प्ररूपणा कर्त्तव्या, ततः क्षेत्रस्य संयतिप्रायोग्यस्य मार्गणा–प्रत्युपेक्षणा वक्तव्या, ततस्तासां योग्या वसतिर्विचारभूमिश्च, ततो गच्छस्य–संयतिवर्गस्यानयना, ततो वारको–घटवत्स्वरूपं, तदनन्तरं भक्तार्थता–समुद्देशनं तस्य विधिः–व्यवस्था, ततः प्रत्यनीककलीपद्रवतो निवारणं, ततो भिक्षायां निर्गमः, ततो निर्ग्रन्थानां कस्मादेको मासस्तासां च कस्मात् द्वौ मासौ?, एतानि द्वाराणि वक्तव्यानीति द्वारगाथाद्वयसमुदायार्थः, अथावयवार्थं प्रतिद्वारमाह–तद्यथा 'पिअधम्मे०' व्याख्या–प्रियः–इष्टो धर्मः श्रुतचारित्ररूपो यस्य स प्रियधर्मा, यस्तु तस्मिन्नेव धर्मे दृढो–द्रव्यक्षेत्राद्यापदुदयेऽपि निश्चलः स दृढधर्मा, राजदन्तादित्वाद्दृढशब्दस्य

पूर्वनिपातः, संविग्नो द्विधा—द्रव्यतो भावतश्च, द्रव्यतो मृगः सदैव त्रस्तमानसत्वाद्, भावतो यः संसारभयोद्विग्नः पूर्वरात्रापरराात्रकाले संप्रेक्षते—किं वा मया कृतं ? किं वा कर्त्तव्यशेषं ? किं वा शक्यमपि तपःकर्मादिकमहं न करोमीत्यादि, 'वज्जभीरु'त्ति अकारप्रश्लेषादवद्यं—पापं सूचनात्सूत्रमितिकृत्वा तद्भीरुः—अवद्यभीरुः, ओजस्तेजश्चोभयमपि वक्ष्यमाणलक्षणं तद्विद्यते यस्य स ओजस्वी तेजस्वी वेति, संग्रहो द्रव्यतो वस्त्रादिभिर्भावतः सूत्रार्थाभ्याम्, उपग्रहो द्रव्यत औषधादिभिः भावतो ज्ञानादिभिः, एतयोः संग्रहोपग्रहयोः कुशलः, सूत्रार्थविद्—गीतार्थः, एव एवंविधो गणाधिपतिः—आर्यिकाणां गणधरः स्थापनीयः॥४॥ अथौजस्तेजसी व्याचष्टे—'आरोह' व्याख्या, आरोहो नाम—शरीरेण नातिदैर्घ्यं नातिह्रस्वता परिणाहो—नातिस्थौल्यं नातिदुर्बलता, अथवा आरोहः—शरीरोच्छ्रयः परिणाहो—बाह्वोर्विष्कम्भः, एतौ द्वावपि तुल्यौ न हीनाधिकप्रमाणौ 'चिअमंसो'त्ति भावप्रधानत्वान्निर्देशस्य चितमांसत्वं नाम वपुषि पांसुलिका नाऽवलोक्यन्ते, तथा इन्द्रियाणि च प्रतिपूर्णानि, न चक्षुःश्रोत्राद्यवयवविकलतेति भावः, अथैतदारोहादिकमोज उच्यते तद्यस्यास्ति स ओजस्वी, तेजः पुनर्देहे—शरीरे अनपत्रप्यता—अलज्जनीयता, दीप्तियुक्तत्वेनापरिभूतत्वं, तद्विद्यते यस्य स तेजस्वीति, गतं गणधरप्ररूपणाद्वारम्, अथ क्षेत्रमार्गणाद्वारमाह—'खित्तस्स उ०' व्याख्या—क्षेत्रस्य संयतीप्रायोग्यस्यानुपूर्व्या 'थुइमंगलमामंतण' इत्यादिना पूर्वोक्तप्रकारेण प्रत्युपेक्षणा गणधरेण कर्त्तव्या, आह—किं—केन हेतुना गणधरः स्वयमेव प्रत्युपेक्षणाय व्रजति ?, उच्यते, यो बलीवर्दश्चारीं चरति स एव तृणभारं वहति, एवं यो निर्ग्रन्थीगणस्याधिपत्यमनुभवति स एव सर्वमपि तच्चिन्ताभरमुद्वहति, आह—संयत्यः किमर्थं न गच्छन्तीत्युच्यते—'संजई०' व्याख्या, यदि संयत्यः क्षेत्रं प्रत्युपेक्षितुं गच्छन्ति तत्राचार्यस्य चतुर्गुरवः आज्ञादयश्च दोषाः, यथा शकुनिका पक्षिणी श्येनस्य गम्या भवति 'पेसि'त्ति यथा वा मांसपेसिका

आप्रपंशिका या सर्वस्याप्यनिल्पर्णाया तथा एता अपि, अत एव 'पल्लणय'त्ति विषयार्थिना प्रेर्यन्ते, तथा तुच्छास्ततो येन तेना-न्यातागादिना लोभेन प्रलोभ्य आसिआवणं—अपहरणं तासां क्रियते, एवमादयो दोषा भवन्ति। इदमेव भावयति—'तुच्छेण०' व्याख्या—तुच्छेनाहारवस्त्रादिना स्त्री लोभ्यते, अत्र भृगुकच्छप्रान्तेन निकृतिश्राद्धेनोदाहरणं, कथमित्याह—'णंत'त्ति वस्त्राणि तैर्निम-न्त्रणां कृत्वा वहति प्रवहणे चैत्यवन्दनार्थमारूढानां तेनाक्षेपणम्—अपहरणं कृतमिति, जह भरुअच्छे आगंतुगवाणिअओ तवण्णी-अगदृशी संजईओ रूववईओ दट्ठूण कवडसड्ढत्तणं पडिवण्णो,ताओ तस्स विसंभिआओ,गमणकाले पवत्तिणिं विण्णवेइ—वहणठाणे मंगलट्ठा पडिलाहणं करेमि, तो संजईओ पट्ठवेह, अम्हेवि अणुग्गहिआ होज्जामो, तओ पट्ठविए गया, कवडसड्ढेण भण्णंति—पढमं चेइआइं वंदह, तो पडिलाहणं करेमित्ति, ताओ जाणंति—अहो विवेगो,तओ चेइअवंदणत्थमारूढाणं पयट्टिअं वहणं जाव आ-मिआविआओ। एएहिं० व्याख्या—एतैः कारणैः संयतीनां क्षेत्रप्रत्युपेक्षा कर्तुं न कल्पते,केन पुनः प्रत्युपेक्षणायां गन्तव्यमित्याह—गन्तव्यं मणपरेण विधिना, कः पुनर्विधिरित्याह—यः पूर्वमत्रैव मासकल्पप्रकृते स्थविरकल्पिकविहारद्वारे वर्णितः, आह—कीदृशं क्षेत्रं प्रत्युपेक्षणीयम् ?, उच्यते,'जत्थाधि०' 'जहिअ०' व्याख्या—यत्र ग्रामादावधिपतिर्भोगिकादिषु यः शूरः,चारभटादिभिरनभिभ-वनीय इत्यर्थः, स च श्रमणानां—साधूनां विशेषं जानाति यथेदृशममीषां दर्शने व्रतमीदृशश्च समाचारः,एतादृशे क्षेत्रे साध्वीयोग्ये श्रमणानां प्रत्युपेक्षणा भवति, तथा यत्र दुःशीलजनः तस्करश्वापदभयं वा यत्र नास्तीदृशे निष्प्रत्यपाये क्षेत्रे आर्यिकाणां प्रायोग्य-प्रत्युपेक्षणा कर्तव्या भवति। अथ वसतिद्वारमाह—'गुत्ता गुत्त' व्याख्या—गुप्ता वृत्या कुड्येन वा परिक्षिप्ता,गुप्तद्वारा—कपाटद्वयो-पेतद्वारा, यस्यां च शय्यातरः कुलपुत्रकः कथंभूतः ?—सत्त्ववान् , न केनापि क्षोभ्यते,महदपि च प्रयोजनं कर्तुमध्यवस्यति,गम्भीरो

नाम संयतीनां पुरुषाद्याचरणं दृष्ट्वाऽपि त्रिपरिणामं न याति, तथा भीता—चकिता पर्षद् यस्य स भीतपर्षद्, आज्ञैकसारतया यस्य भ्रकुटिमात्रमपि दृष्ट्वा परिवारः सर्वोऽपि भयेन कम्पायमानस्तिष्ठति, न च कश्चिदन्याये प्रवृत्तिं करोति, मार्दवम्—अस्तब्धता तद्विद्यते यस्य स मार्दविकः, एवंविधो यदि कुलपुत्रको भवति तत 'ओभासण'न्ति संयतीनामुपाश्रयस्यावभाषणं कर्तव्यम्, अवभाषिते च यद्ययमुपाश्रयमनुजानीते ततो भण्यते—'चिन्तण'त्ति यथा स्वकीयाया दुहितुः स्नुषाया वा चिन्तां करोषि तथा यद्येतासामपि प्रत्यनीकताद्युपसर्गरक्षणे चिन्तां कर्तुमुत्सहसे ततोऽत्र स्थापयामः, स प्राह—बाढं करोमि चिन्तां, परं कथं पुनस्तद्रक्षणीयाः?, ततोऽभिधातव्यं यथा किलाक्षिणी स्वहस्तेन परहस्तेन वा दूयमाने रक्ष्येते तथैता यद्यात्ममानुषैः परमानुषैर्वा उपद्रूयमाणा रक्षसि तत एता रक्षिता भवन्तीति, यद्येवं प्रतिपद्य स्वोपाश्रयस्य दानं करोति ततः स्थापनीयाः, अथाप्रतिपद्यमाने स्थापयन्ति ततश्चत्वारो गुरुकाः, अन्याचार्याभिप्रायेणामुमेवार्थमाह—'घणकुड्ड'० व्याख्या—घनकुड्या—पक्वेष्टिकादिमयभित्तिका सकपाटा—कपाटोपेतद्वारा सागारिकसत्कानां मातृभगिनीनां गृहाणि पर्यन्ते—पार्श्वतो यस्याः सा सागारिकमातृभगिनीगृहपर्यन्ता, गाथायामनुक्तोऽपि गृहशब्दो द्रष्टव्यः, निष्प्रत्यपाया—दुर्जनप्रवेशादिप्रत्यपायरहिता विस्तीर्णं पुरोहडं—गृहपश्चाद्भागो यस्यां सा विस्तीर्णपुरोहडा, एवंविधा वसतिः संयतीनां योग्या। 'नासन्ना०' व्याख्या—विधवाश्च ताः परिणतवयसश्च—स्थविरस्त्रियस्तासां तथा मध्यस्थानां—कन्दर्पादिभावविकलानामविकाराणां—गीतादिविकाररहितानां अकुतूहलानां—संयत्यो भोजनादिक्रियाः कथं कुर्वन्तीति कौतुकवर्जितानां भावितानां—साधुसाध्वीसामाचारीवासितानां संबन्धि यत्प्रतिवेश्म—प्रत्यासन्नं तत्र नासन्ने नातिदूरे संयतीप्रतिश्रयो ग्राह्यः, अथान्याचार्यपरिपाट्या शय्यातरस्वरूपमाह—'भोइअ०' 'कुतूहल'० व्याख्या—यो भोगिकः—महत्तरादि बहुस्वजनः—बहुपाक्षिकस्तथा

प्रेरकः–पिङ्गादीनां स्वगृहे प्रविशतां निवारकः कुलीनः परिणतवयाश्च प्रतीतः, अभीरुः–उत्पन्ने महत्यपि कार्ये न बिभेति–कथमेतत्कर्त्तव्यमिति,अनभिगृहीतः–आभिग्रहिकमिथ्यात्वरहितः–अकुतूहलः संयतीनां भोजनादिदर्शने कौतुकवर्जितः,यस्तु कुलपुत्रकः सत्त्ववान्–न केनाप्यभिभवनीयः भीतपर्षत् प्राग्वत् भद्रकः शासने बहुमानवान् परिणतो वयसा मत्या वा धर्मार्थी–धर्मश्रद्धालुर्विनीतो–विनयवान्,एष आर्यिकाणां शय्यातरो भणितस्तीर्थकरैरिति, गतं वसतिद्वारं। अथ विचारद्वारमाह–'अणावाय०'व्याख्या–अनापाता असंलोका१ अनापाता संलोका२ आपाता असंलोका३ आपाता संलोका४ चेति चतस्रो विचारभूमयः,एतासु संयतीनां विधिमाह–'विआरे' व्याख्या, यदि पुरोहडे विद्यमाने संयत्यो ग्रामाद्बहिर्विचारभूमौ गच्छन्ति ततश्चतुर्ष्वपि स्थण्डिलेषु प्रत्येकं चतुर्गुरुकाः, अन्तरेऽपि च–ग्रामाभ्यन्तरे पुरोहडादौ आपातासंलोकलक्षणं तृतीयं स्थण्डिलं वर्जयित्वा शेषेषु त्रिष्वपि स्थण्डिलेषु गच्छन्तीनां त एव चत्वारो गुरुकाः, यत्र कुलजानां स्त्रीणामापातो भवति तत्र गन्तव्यं, किं पुनः कारणं प्रथमादीनि स्थण्डिलानि तासां नानुज्ञायन्ते ?, उच्यते, 'जत्तो दु०' व्याख्या—'जत्तो'त्ति यस्यां दिशि दुःशीलाः–परदाराभिगामिनः पुरुषाः तथा वेश्याः स्त्रियो नपुंसकाश्च हेट्ठत्ति अधोनापिताः तिर्यञ्चश्च चत्वारो वानरादयः आपतन्ति सा तु–सा पुनः दिग् प्रथमा द्वितीया चतुर्थी च प्रतिकुष्टा–निषिद्धा, प्रथमादीनि स्थण्डिलानीत्यर्थः, अथैनामेव निर्युक्तिगाथां व्याचष्टे–'चारुभडा०' व्याख्या—चारभटाः–राजपुरुषाः घोटाः–चट्टाः मिण्ठा–गजपरिवर्त्तकाः सोलाः–तुरगचिन्तानियुक्ता एवमादयो ये तरुणाः सन्तो दुःशीलाः प्रथमद्वितीययोः स्थण्डिलयोरनापातत्वादेकान्तमितिकृत्वा उद्भ्रमः स्त्रीषु वा वेश्यासु वा अमंसुउत्ति नपुंसकस्तेषु पूर्वप्राप्तेषु तदर्थ–तेषामुद्भ्रामकस्त्रीप्रभृतीनां प्रतिषेधनार्थमायान्तीति चतुर्थे स्थण्डिले संचलितत्वाद् एते दुःशीलादयः

संयतीवर्गं पश्येयुः, संयतीवर्गेण तेन वा दृश्येरन् इत्यतस्तदपि निषिध्यते, 'हेट्ठउ०' व्याख्या–अधस्तादुपासनम्–अधोलोचकर्म तद्धेतवे अधोनापितेषु पूर्वप्राप्तेष्वनेकेषां मनुष्याणामधोलोचकर्मकारापकाणामागमने सति यदुदीर्णमोहास्ते संयतीं गृह्णन्ति ततो ग्रहणे उड्डाहो भवति, तथा वानरमयूरहंसाः छगलाः शुनकादयस्तिर्यञ्चस्तत्रायाताः संयतीमुपसर्गयेयुः, यत एवं ततः किमित्याह–'जइ अंतो०' व्याख्या–यद्यन्तः–ग्रामाभ्यन्तरे व्याघातः–पुरोहडादेरभावस्ततो बहिस्तासां तृतीया विचारभूमिरापातासंलोकरूपाऽनुज्ञाता, तत्रापि स्त्रीणामेवापातो ग्राह्यो, न पुरुषाणां,शेषा विचारभूमयोऽनापातासंलोकाद्या आर्यिकाणां नानुज्ञाताः। गतं विचारद्वारं । अथ संयतीगच्छस्यानयनमिति द्वारमाह–'पडिले०' व्याख्या–एवं च सति विचारभूम्यादिविधिना प्रत्युपेक्षितं च संयतीप्रायोग्यं क्षेत्रं ततः संयतीवर्गस्यानयनं तत्र क्षेत्रे भवति, कथमित्याह–निष्कारणे निर्भये निराबाधे वा सति साधवः पुरतः स्थिता गच्छन्ति,कारणे तु समकं वा साधूनां पार्श्वतः पुरतो वा साधूनामग्रतः स्थिताः संयत्यो गच्छन्ति। 'निप्पच्चवा०' व्याख्या–निष्प्रत्यपाये संयतीनां संबन्धिनः– स्वज्ञातीयाः भाविताश्च–सम्यक्परिणतजिनवचनाः निर्विकाराः संयतास्तैः सहः गणधर आत्मद्वितीय आत्मत्रतीयो वा संयतीर्विवक्षितं क्षेत्रं नयति। अथ स्तेनादीनां भयं वर्त्तते ततः सार्थेन सार्द्धं नयति, यो वा संयतः कृतकरणः –इष्वस्त्रकृताभ्यासस्तेन सहितः संयतीस्तत्र नयति, स च गणधरः स्वयं पुरतः स्थितो गच्छति, संयत्यस्तु मार्गतः स्थिताः, अत्रैव मतान्तरमुपन्यस्य दूषयन्नाह–'उभय०' व्याख्या–एके सूरयो ब्रुवते–उभयं–कायिकीसंज्ञे तदर्थमादिशब्दादपरस्मिन् वा क्वचित्प्रयोजने निविष्टम्–उपविष्टं सन्तं संयतं व्रतनीं च मा प्रेरयतु इत्यनेन हेतुना संयत्यः पुरतो गच्छन्ति,अत्राचार्य आह–तत्र यदुक्तं तत्तु न युज्यते, कुत इत्याह– पुरतो गच्छन्तीनां तासामविनयः साधुषु संजायते, लोकविरुद्धं चैवं स्फुटं भवति–अहो महिलाप्र-

धानममीषां दर्शनं, यत एवमतो मार्गतः स्थिता एव ता गच्छन्ति, उभयं च-कायिकीसंज्ञारूपं यतनया कुर्यात्, कापुनर्यतनेति चेदुच्यते, यत्रैकः कायिकसंज्ञां व्युत्सृजति तत्र सर्वेऽपि तिष्ठन्ति, तथा स्थितांश्च तान् दृष्ट्वा संयत्योऽपि नाग्रतः समागच्छेयुः, ता अपि पृष्ठत एव शरीरचिन्तां कुर्वन्तीति गतं गच्छस्यानयनमितिद्वारं । **इति बृहत्कल्पभाष्यवृत्तिप्रथमखण्डे प्रथमोद्देशकप्रान्ते।** एवं व्यवहारवृत्तावपि बोध्यं। तथा—पहगमणवसहिआहारसुअणथंडिल्लविहिपरिट्ठवणं। नायरइ नेव आणइ अज्जावट्टावणं चेव ॥१॥ इति **श्रीउपदेशमालायां**, अत्रार्यिकावर्त्तनं वर्त्तापनं न जानात्यनेन प्रकारेणार्यिकया प्रवर्त्तनीयं, ग्रामादौ स्थितौ गमने च सम्यगाचारपरिज्ञानशून्यः प्रवर्त्तमानः पार्श्वस्थो भण्यते इत्यर्थः, यस्तु जानाति स तु प्रागुक्तविधिना ग्रामादौ विहरन् साध्वीभिः सहापि जिनाज्ञाराधको बोध्यः। न पुनः स्वनिश्रिताः साध्व्य एकाकिन्यो भ्रमन्ति, स्वयं च तद्विरहितो ग्रामादौ यात्यायाति चेत्यादि। आगमोक्तविधिना शरीरचिन्तानिमित्तमपि बहिर्गमनं साध्वीनामनुचितं, कथं स्वेच्छया तासां ग्रामानुग्रामविहारकरणमुचितमिति सूक्ष्मधिया पर्यालोच्यं ॥ नन्वेवं विहारकरणविधिरपि साध्वीनामेवागमे भणितस्तासामेवानार्यलोकेभ्यः शीलखण्डनादिभयसंभवात्, कुपाक्षिकवेषधारिणीनां तु सम्यक्त्वस्याभावेन शीलगुणलेशस्याप्यभावान्न तासां शीलखण्डनादिभयमिति स्वेच्छयाऽपि ग्रामानुग्रामपरिभ्रमणेऽपि न कश्चिद्दोषः, तथा च सिद्धान्तसम्मतिप्रदर्शने किं प्रयोजनमितिचेत्, सत्यं, नहि वयं कुपाक्षिकवेषधरास्तद्वेषधारिणीभिः सह परिभ्रमन्त्वितिधिया सिद्धान्तसम्मतिं दर्शयामः, किंतु तद्वचसा मुग्धजनानां शङ्कापातकं यत्तत्पराकरणमेव प्रयोजनमिति गाथार्थः ॥९७॥ अथ पुनरपि न्यूनमुत्सूत्रमाह—

**अहुणा मासविहारं वुच्छिन्नं भणइ छिन्नसन्नो आ । जिणदत्तो जिणदत्तोवएसपरमत्थममुणंतो ॥९८॥**

अधुना-सम्प्रति काले मासविहारं-मासकल्पेन विहरणं व्युच्छिन्नं भणति जिनदत्तो नाम खरतरमताकर्षकः, कीदृशः ?-छिन्न-संज्ञाकः-छिन्ना संज्ञा-सुदृष्टिलक्षणा यस्य स तथा, किं कुर्वन् ?-अजानन्, कं ?-जिनेन-तीर्थकृता दत्तो य उपदेशस्तस्य परमार्थे-रहस्यमिति गाथार्थः ॥९८॥ अथैवं कुत इत्याह—

जम्मोत्तु मासकप्पं अन्नो सुत्तंमि नत्थि अ विहारो। इअ सिद्धंतंमि फुडं दिट्ठं दिट्ठिप्पहाणेहिं ॥९९॥

यद्-यस्मात्कारणात् मासकल्पं मुक्त्वा अन्यः सूत्रे विहारो नास्तीति सिद्धान्ते दृष्टिप्रधानैः-सुसाधुभिर्दृष्टं। यथा दृष्टं तथाचाह—पडिबंधो लहुअत्तण न जणुवयारो न देसविण्णाणं। णाणाराहणमेए दोसा अविहारपक्खंमि ॥ १ ॥ अस्या अर्थः-प्रतिबन्धः-शय्यातरादिवस्तुष्वभिषङ्गः लघुत्वं च-कथमेते स्वगृहं परित्यज्यान्यगृहेषु व्यासक्ताः अनुपकारश्च-विचित्रदेशस्थितजनानामुपदेशदानाभावेन 'देसविण्णाण'त्ति न-नैव देशेषु-विविधमण्डलेषु संचरतां यद्विज्ञानं-विचित्रलोकलोकोत्तरज्ञानं 'णाणाराहण'त्ति नाज्ञाराधना, आज्ञा चैवं-'मोत्तूण मासकप्पं अण्णो सुत्तंमि नत्थि उ विहारो'त्ति, एते दोषा अविहारपक्षे ॥ कदाचित्संयमबाधाकारिदुर्भिक्षग्लान्यादिकारणवशाद्व्यतो मासकल्पाभवने तु वसतिपाटकपरावर्त्तेनान्ततः शयनभूमिपरावर्त्तनेनापि चायमवश्यं विधेय एव, यदुक्तं-"कालाइदोसओ पुण ण दव्वओ एस कीरए निअमा। भावेण उ कायव्वो संथारगवच्चयाईहिं ॥१॥ संस्तारकव्यत्ययादिभिरित्यर्थः। इति पञ्चाशकवृत्तौ ॥ तथा मासादूर्ध्वमवस्थाने वसतिरप्युपहता भवति, यदागमः-पंचविहे उवघाए पं०, तं०-उग्गमोवघाए१ उप्पायणोवघाए२ एसणोवघाए३ परिकम्मोवघाए४ परिहरणोवघाए५। इति श्रीस्थानाङ्गे, एतद्वृत्त्येकदेशो यथा-तथा परिहरणा आसेवा तयोपध्यादेरकल्प्यता, तत्रोपधेर्यथा एकाकिना हिण्डकसाधुना यदासेवितमुपकरणं तदुपहतं भवतीति समयव्यवस्था "ज-

गण अप्पडिबज्झण जइवि चिरेणं न उव्वहंमे" त्ति वचनाद्, अस्य चायमर्थः—एकाकी गच्छभ्रष्टो यदि जागर्ति दुग्धादिषु च न प्रतिबध्यते तदा यद्यसौ गच्छे चिरेणागच्छति तथाप्युपधिर्नोपहन्यते, वसतिरपि मासचतुर्मासयोरुपरि कालातिक्रान्तेति, तथा मासद्वयं चतुर्मासद्वयं चावर्जयित्वा पुनस्तत्रैव वसतावुपस्थानेति च तद्दोषाभिधानाद्, उक्तं च—"उउवासासुमईता कालातीता उ सा भवे सेज्जा । सा चेव उवट्ठाणा दुगुणा दुगुणं अवज्जित्ता ॥१॥" इति श्रीस्थानाङ्गवृत्तौ, तथा "संवच्छरं वावि परं पमाणं, बीअं च वासं न तहिं वसिज्जा । सुत्तस्स मग्गेण चरिज्ज भिक्खू, सुत्तस्स अत्थो जह आणवेइ ॥१॥" इति श्रीदश० (५१०*) । तद्वृत्त्येकदेशो यथा—संवत्सरं वापि, अत्र संवत्सरशब्देन वर्षासु चातुर्मासिको ज्येष्ठावग्रह उच्यते तमपि, अपिशब्दात् मासमपि, परं प्रमाणं—वर्षाकृतुबद्धयोरुत्कृष्टमेकत्र निवासकालमानम्, तद्द्वितीयं च वर्षं चशब्दस्य व्यवहित उपन्यासो द्वितीयं वर्षं च वर्षासु, चशब्दान्मासं च ऋतुबद्धे, न तत्र क्षेत्रे वसेत्, यत्रैको वर्षाकल्पो मासकल्पश्च कृतः, अपि तु सङ्गदोषाद्द्वितीयं तृतीयं च परिहृत्य वर्षादिकालं, ततस्तत्र वसेदित्यर्थः, सर्वथा, किं बहुना ?—सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुः—आगमादेशेन वर्त्तेतेति भावः, तत्रापि नौघत एव च यथाश्रुतग्राही स्याद्, अपि तु सूत्रस्यार्थः—पूर्वापरविरोधितत्त्वयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाऽऽज्ञापयति—नियुङ्क्ते तथा वर्त्तेत, नान्यथा, यथेहापवादतो नित्यवासोऽपि वसतावेव प्रतिमासादि साधूनां संस्तारकगोचरादिपरिवर्त्तेन, नान्यथा, शुद्धापवादायोगादित्येवं वन्दनप्रतिक्रमणादिष्वपि तदर्थप्रत्युपेक्षणेनानुष्ठानेन वर्त्तेत, न तु तथाविधलोकहेयां तं परित्यजेत्, तदाशातनाप्रसङ्गादिति श्रीदशवै० वृत्तौ ॥ इत्यनेकग्रन्थसिद्धेऽपि मासकल्पव्युच्छेदवचनं महापापमितिगाथार्थः ॥९९॥

अथ यद्वचनं तस्य भ्रान्तिजनकं तदाह—

जं मासकप्पअविहारुय वयं पंचवत्थुए अत्थि । तं तेणेव कमेणं नवकप्पा निअमओ नऽहुणा ॥२००॥

यत् 'मासकल्पाविहारव'दितिवचनं पञ्चवस्तुके—पञ्चवस्तुकवृत्तावस्ति—विद्यते तत्तेन क्रमेणैकस्मिन् कस्मिंश्चिन्मासकल्पं विधायान्यत्र समीपवर्त्तिनि ग्रामेऽपि मासकल्पमित्यादिक्रमेण नव कल्पाः नियमतो—निश्चयेनाधुना न सन्तीतिभावार्थः, अत एवान्नपानादीनां दौर्लभ्ये मासकल्पभङ्गो भणितः, यदुक्तं—जइ दक्खिणादीसाए पडिलेहंति तो इमे दोसा—भत्तपाणं न लभंति, अलभंते जं विराहणं पावेंति, एसणं वा पेल्लेति, जं वा भिक्खं अलभमाणा मासकप्पं भंजंति" त्ति श्रीआवश्यकपारिष्ठापनिकानिर्युक्तिप्रान्ते वृत्ताविति गाथार्थः ॥२००॥ अथ हेतुमाह—

कालपरिहाणिदोसा खित्ताभावेण ऊणया अहवा । अहिए पाडगवसहीसंथारगवच्चयाईर्हि ॥२०१॥

"कालस्स य परिहाणी संजमजुग्गाइं नत्थि खित्ताइं । जयणाइ वट्टिअव्वं न हु जयणा भंजए अंगं ॥१॥" इत्यागमवचनात्कालपरिहाणिदोषात् क्षेत्राभावेन ऊनता स्याद्, अयं भावः—दुष्षमकाले नगराणि ग्रामतुल्यानि ग्रामाश्च प्रेतवनोपमा भविष्यंतीति प्रायो मासकल्पयोग्यानि क्षेत्राण्यल्पानि, ततोऽपि चतुर्मासकयोग्यान्यल्पानीतिकृत्वा माऽधिकावस्थानेन कुलादिषु प्रतिबन्धभाजः साधवोऽभूवन्निति मासकल्पोऽप्येकत्रैकादिदिनैरून एव कर्त्तव्य इत्याचरणा कृता, न पुनर्व्युच्छेदधिया यावज्जीवमेकत्रैवावस्थातव्यमिति क्वापि दृष्टं श्रुतं वा, तथात्वे चान्यत्र स्थितानां जनानां साधुदर्शनाद्यभावेन कथं धर्मप्राप्तिः स्याद्?, अथाचरणयोनतायां हेतुमाह—'अथवे'त्यादि अथवेत्यपवादपदेऽधिकावस्थाने पाटके च सति संस्तारकव्यत्ययादिभिरेकत्र क्षेत्रेऽवस्थातव्यम्, अयं भावः—कदाचित्तथाविधग्लान्यादिसद्भावेऽक्षमो विहारादौ पाटकपरावर्त्तनेन तिष्ठति, तत्सामग्र्यभावे च वसतिपरावर्त्तनेनैवं संस्तारकव्यत्ययेनापि

स्वातन्त्र्यमिति प्रागुक्तपञ्चाशकवृत्त्याद्यनुसारेण सा आचरणा ऊनताविषयिणी बोध्या, अन्यथैवं त्रिकल्पासंभवात्, नहि व्युच्छिन्ने मासकल्पे पाटकादिपरावृत्तिभणनं सप्रयोजनं स्याद्, यद्यपि कुपाक्षिकस्य देशान्तरपरिभ्रमणमग्निवत्तत्तद्देशनिवासिनां जनानामहितायैवेतिकृत्वा नित्यवास एव श्रेय इति तदर्थं शास्त्रसम्मतिप्रदर्शनमनुचितमेव, तथाऽपि मासकल्पाविहारवदिति वाक्यमुद्घोषयन् तीर्थान्तर्वर्त्तिनां कतिचिन्मुग्धानां प्रमादरुचिकानां च साधूनां शङ्काहेतुर्भवतीति तन्निरासार्थं सार्थकमेवेतिगाथार्थः ॥ २०१ ॥

अथ तात्पर्यमाह—

एवं करणाणुण्णा तत्थवि जो भणइ मासवुच्छेअं । सो खित्तमुच्छकद्दममंडूओ पंडिअमण्णो ॥२०२॥

एवं—प्रागुक्तप्रकारेण मासकल्पादिकरणानुज्ञा जिनाज्ञा, तत्रापि यो मासकल्पव्युच्छेदं भणति स क्षेत्रमूर्च्छा—नित्यवासलाम्पट्यं तल्लक्षणो यः कर्दमः—कचवरः तत्र तत्संबन्धी वा मण्डूकः सन् पण्डितंमन्यः—स्वगृह एवात्मानं पण्डितं मन्यते इति गाथार्थः ॥२०२॥

अथोनमत्सूत्रमुपसंहरन्नाह—

गिहिणो पाणागारा पंचासयमाइवुत्तअविलुत्ता । इच्चाइ अणेगविहं उस्सुत्तं तम्मए ऊणं ॥२०३॥

गृहिणां पानाकाराः 'पाणस्स लेवेण वा अलेवेण वा अच्छेण वा बहलेण वा ससित्थेण वा असित्थेण वे'ति पानस्य षडाकाराः न संभवन्तीति निजमतिविकल्पनया पञ्चाशकाद्युक्ता अपि लुप्ता—णिगन्तर्गम्यः लोपिता—नाङ्गीकृताः, तत्र पंचाशकादिर्यथा—"इह पुण अद्धारूवं णवकारादी पइदिणुवओगित्ति । आहारगोअरं जइगिहीण भणिओ इमं चेव ॥१॥ गहणे आगारे सामाइए चेव विहिसमाउत्तं । भेए भोगे सयपालणाए अणुबंधभावे अ ॥२॥त्ति" पंचा० सूत्रे (१८७–८) तद्वृत्तौ च० गृहिसाधुसाधारणप्रत्याख्यानं तदाकारा-

दयश्च भणिताः, परं न भेदः,तथाऽऽस्तामन्यद्,असंभव्यपि पारिष्ठापनिकाकारो गृहिणामस्खलितपाठोच्चारवशाद्भणितः,तथाहि—ननु परिष्ठापनिकादय आकाराः साधूनामेव घटन्ते, ततो गृहिणामयुक्तमेतत्, नैवं, यतो यथा गुर्वादयः पारिष्ठापनिकस्यानधिकारिणो यथा वा भगवतीयोगवाहिनो गृहस्थसंसृष्टाद्यनधिकारिणोऽपि पारिष्ठापनिकाद्याकारोच्चारणेन प्रत्याख्यान्ति, अखण्डसूत्रमुच्चारणीयमितिन्यायाद्, एवं गृहस्था अपीति न दोषः,इत्यादि प्रथमपञ्चाशकवृत्तावित्यादि अनेकविधमूनमुत्सूत्रं तन्मते—खरतरमते भवतीति गाथार्थः ॥३॥ अथोभयस्वभावं यदयथास्थानमुत्सूत्रं तदाह—

अह जहअजहट्ठाणं उभयसहावं हविज्ज तह वुच्छं । अभिवड्ढिअंमि सावणि पज्जोसवणावि ओसवणा ॥२०४॥

अथ—अनन्तरमधिकन्यूनोत्सूत्रप्ररूपणानन्तरमुभयस्वभावमयथास्थानं यथा भवेत्तथा वक्ष्ये इति पूर्वार्द्धं । अथ किं तदित्याह—अभिवर्धिते—अभिवर्द्धितसंवत्सरे श्रावणादिमासवृद्धौ कदाचिच्छ्रावणेऽपि—श्रावणमासेऽप्यपश्रवणा—अवगतं श्रावणमागमादिभ्यो यस्याः सा, क्वाप्यागमे सांवत्सरिकप्रतिक्रमणादिपञ्चकृत्यविशिष्टं श्रावणेऽपि पर्युषणापर्व भवतीति श्रवणाभावात् पर्युषणायाः अयथास्थानमुत्सूत्रं भवति, तच्चोभयस्वभावं, भाद्रपदो हि पर्युषणायाः स्थानं भवति तत्त्यागे च न्यूनमुत्सूत्रम्, अस्थानभूते च श्रावणे सदारोपणमधिकमित्युभयस्वभावमुत्सूत्रमिति गाथार्थः ॥२०४॥ अथ यथाऽऽगमोक्तं तथा चाह—

जण्णं सवीसराए मासे सेसेहिं सत्तरीए अ । पज्जोसवणा सवणामिअंमि मासंमि भद्दवए ॥२०५॥

यद्—यस्मात् णमित्यलङ्कारे सविंशतिरात्रे मासेऽतिक्रान्ते सप्तत्या च दिनैः शेषैः श्रवणामृते—सिद्धान्तोक्तत्वेन श्रवणयोरमृतमिव यस्तस्मिन् भाद्रपदे मासे पर्युषणा भवति, यदागमः—"समणे भयवं महावीरे वासाणं सवीसइराए मासे वइक्कंते सत्तरिं राइंदिएहिं

सेसेहिं वासावासं पज्जोसवेति'' त्ति श्रीसमवायाङ्गे, एवं चागममर्यादया पर्युषणाव्यतिकरः श्रावणवृद्धौ भाद्रपदे भाद्रपदवृद्धौ च द्वितीयभाद्रपद एव पर्युषणा सिद्ध्यति, अन्यथा 'सत्तरि राइंदिएहिं सेसे'हिन्ति प्रवचनबाधा स्यात्, नन्वेवं 'सवीसइराए मासे वइक्कंते'त्ति प्रवचनबाधाऽपि किं दृकपथं नावतीर्णेतिचेन्मैवं, तत्र प्रवचनबाधागन्धस्याप्यभावाद्, यतोऽभिवर्द्धितो मासोऽत्रागपरत्र वा दिनगणनापंक्तौ नोपन्यस्यते, कालचूलकत्वाद्, अन्यथा कार्तिकसितचतुर्दश्यां चतुर्मासकप्रतिक्रान्त्या ''पंचण्हं मासाण्हं दसण्हं पक्खाणं पंचासुत्तरसयराइंदिआणं'' इत्यादि चातुर्मासिकक्षामणकालपाकः, तथा 'तेरसण्हं मासाणं छवीसण्हं पक्खाणं तिण्णिसयनउइराइंदिआण'मित्यादि सांवत्सरिकक्षामणकालापकश्च वक्तव्यो भवेत्, तच्च तवाप्यनिष्टमिति भाद्रपद एव पर्युषणा आगमसिद्धेतिगाथार्थः ॥२०५॥ अथोक्तमेव दृढयति—

जह चाउमासिआइं कत्तिअमासाइमासनिअयाइं । तह भद्दवए मासे पज्जोसवणावि जिणसमए ॥ २०६ ॥

यथा चातुर्मासकानि कार्त्तिकमासादिमासाः—कार्त्तिकफाल्गुनाषाढमासास्तैः सह नियतानि—नियमितानि, कार्तिकचतुर्मासकं कार्त्तिकसितचतुर्दश्यामेव, फाल्गुनचतुर्मासकं फाल्गुनमास एव आषाढचतुर्मासकं त्वाषाढमास एवेति नियतमासप्रतिबद्धानि तथा पर्युषणापि जिनसमये—जिनसिद्धान्ते भाद्रपद एव मासे नियता चतुर्मासकवत्पर्युषणाऽपि मासनियतेत्यर्थ इति गाथार्थः॥२०॥ अथ मासनियते पर्युषणापर्वणि जिनदत्तः कीदृग् संपन्न इत्याह—

मासाइअंमि वुड्ढे पढमोऽवयवो पमाणमिअ वयणे । जंपंतो जिणदत्तो अजहट्ठाणेण उस्सुत्ती ॥२०७॥

मासादौ वृद्धे आदिशब्दात्तिथिरिति मासतिथ्योर्वृद्धौ सत्यां प्रथमोऽवयवः प्रमाणम्, आषाढादिमासवृद्धौ प्रथमो मासः तिथिवृद्धौ

चैत्रादिवृद्धौ च विंशत्या दिनैः, सर्वत्रापि चतुर्मासकं त्वाषाढपूर्णिमायामेव, संप्रति तु "अभिवड्ढिअंमि वीसा" इत्यादिवचनबलेन श्रावणभाद्रपदवृद्धौ चतुर्मासकं श्रावणेऽपि, परमेतत्सर्वजनविरुद्धं, यतस्त्रीण्यपि चतुर्मासकानि कार्त्तिकफाल्गुनाषाढमासनियतानि, यत्तु जैनटिप्पनकानुसारेण श्रावणभाद्रवृद्धावपि आषाढवृद्धिरेव गण्यते इति तन्न युक्तं, जैनटिप्पनकस्य व्युच्छिन्नत्वात् संप्रति शैवटिप्पनकेनैव व्यवहारप्रवृत्तिः, तदनङ्गीकारे दीक्षाप्रतिष्ठादिमुहूर्त्तपरिज्ञानं दूरे, मासवृद्धिरपि कथं ज्ञायते ?, तस्माच्छ्रावणभाद्रपदवृद्धिर्नाषाढतया व्यवहर्त्तव्या, किंतु श्रावणादितयैवेति, किंच—शतपद्यामपि श्रावणेऽपि चतुर्मासकमिति विचारो नोद्भावितः, तेन ज्ञायते शतपद्यामनुक्तस्यापि प्रवृत्तिराधुनिकैव कियत्कालानन्तरं प्रवृत्तेति गाथार्थः ॥२१॥ अथ कृतागमशरणस्य स्तनिकस्यागमः शरणमेव न भवतीति दर्शयितुमाह—

तित्था चुअस्स आगमसरणं साहाउ पत्तसरणुव्व । जं सुत्तत्थुभयंपिय तित्थायत्तं जिणिंदुत्तं ॥२२॥

तीर्थात्—श्रीवीरप्रवर्त्तिताच्छिन्नतीर्थाच्च्युतस्य—भ्रष्टस्य नरसिंहस्यागमशरणं शाखातश्च्युतस्य पत्रशरणवन्न भवति, अयं भावः—'स्वाधिरूढशाखाभङ्गान्नहि पत्रमालम्बायाल'मितिन्यायात् स्वाधिरूढशाखातः पततः पुरुषस्य तच्छाखापत्रावलम्बनं त्राणाय न भवति, तथा तीर्थाद्भ्रष्टस्य कुपाक्षिकमात्रस्याप्यागमस्त्राणं न भवति, तत्र हेतुमाह—'जं सुत्ते'त्यादि यद्—यस्मात्कारणात् सूत्रार्थोभयमप्यागमस्तीर्थायत्तं—तीर्थवशं "प्रवचनं–द्वादशाङ्गी तस्याधारः तीर्थमपि प्रवचनं भण्यते" इत्यागमवचनाद्, यद्वा 'प्रवचनं वेत्त्यधीते वा इति प्रावचनिकः—कालापेक्षया बह्वागम' इत्याद्यागमवचनाच्च द्वादशाङ्ग्यादि यावच्छ्रुतं तावत्प्रवचनं भण्यते, तच्च तीर्थे एव स्यात्, न पुनस्तीर्थबाह्ये कुपाक्षिकादिसमुदाये, एतच्च जिनेन्द्रोक्तं—तीर्थकरेण भाषितमिति गाथार्थः ॥ २२ ॥ अथ तीर्था-

यत्तत्त्वमेव समर्थयति—

इह आगमो अ तिविहो अत्ताणंतरपरंपरापुव्वो। दो गणहरसीसंता तइओ तित्थप्पवित्तंतो ॥२३॥

इह—प्रवचने आगमस्त्रिविधः—आत्मानन्तरपरंपरापूर्वः, आत्मा चानन्तरं च परम्परा चेतिशब्दाः पूर्वं यस्य स तथा, आत्मागमोऽनन्तरागमः परंपरागमश्चेतिभावः, यदागमः—"अहवा आगमे तिविहे पं०, तं०—अत्तागमे अणंतरागमे परंपरागमे" इति श्रीअनुयोगद्वारे, तत्राद्यौ द्वौ गणधरशिष्यान्तौ, सुधर्मजम्बूस्वाम्यन्तावित्यर्थः, तृतीयस्तु तीर्थप्रवृत्त्यन्तो—यावत्तीर्थानुयायीति गाथार्थः ॥ २३ ॥ अथ संप्रत्यागमः कीदृगित्याह—

संपइ तइओ आगम तित्थदुमसूरिसाहकुसुमसमो। फलसरिसो सुहजोगो मोक्खो महुरो रसासाओ ॥२४॥

संप्रति—वर्त्तमानकाले तृतीय आगमः—परम्परागमलक्षणो वर्त्तते,न पुनरात्मागमानन्तरागमलक्षणौ, तयोर्व्युच्छिन्नत्वात्, स च तीर्थद्रुमसूरिशाखाकुसुमसमः—तीर्थलक्षणो यो द्रुमः—कल्पवृक्षादिलक्षणः तत्र सूरिलक्षणा शाखा तत्र कुसुमसमः—पुष्पसमानः, फलसदृशो यस्तस्माच्छुभयोगः—मनःप्रभृतीनां शुभव्यापारः,मनसोऽशुभव्यापारे प्रवर्त्तनं श्रुतमेव निगृह्णाति,यदागमः—"पहावंतं निगिण्हामि, सुअरस्सीसमाहिअं। न मे गच्छइ उम्मग्गं,मग्गं च पडिवज्जइ॥१॥"त्ति श्रीउत्तरा० (८७०) मधुरः फला (रसा) स्वादो मोक्षः, मधुरफला (रसा) स्वादकल्पो मोक्ष इत्यर्थः, तत्र यथा वृक्षमन्तरेण न शाखासंभवः, शाखामन्तरेण च न कुसुमोत्पत्तिः,तदभावाच्च न फलं, फलाभावात्कुतो मधुररसास्वादः?, तथा तीर्थमन्तरेण न सूरिः, यतः पञ्चवस्तुके—"परम्परागतः सूरिः स्वशिष्यं प्रति सम्यगुद्देशादिविधिना सिद्धान्तमध्याप्य पुस्तकेष्वलिखितं सूरिमन्त्रं ददाती"त्युक्तमस्ति, सूरिमन्तरेण च परम्परागमलक्षणस्तृतीय

आगमोऽपि न संगच्छति, तमन्तरेण न शुभयोगस्तदभावात्कुतो मोक्षः ? इति गाथार्थः ॥२४॥ अथ तीर्थं कथमासीदित्याह—

तित्थं तु कालगज्जा अच्छिन्नं जाव दुप्पसहसूरी । पज्जोसवणचउत्थीठिअंति का तत्थ संकावि ? ॥२६॥

तीर्थं तु श्रीकालकाचार्यादुप्प्रसभसूरिं यावत् पर्युषणाचतुर्थ्याश्रितमिति का तत्र शङ्कापि ?, यदि श्रीवीरस्थापितं तीर्थं चतुर्थीमेवाश्रितं विद्यमानं तर्हि तीर्थाद्बहिर्भवनहेतुः पञ्चमीशङ्कापि न युक्ता, किं तेन सुवर्णेन येन कर्णौ त्रुट्येते इति लोकाभाणकात् किं पञ्चम्याः प्रयोजनं ?, तीर्थाद्बहिर्भूयते इति गाथार्थः ॥ २२ ॥ अथ कुपाक्षिकस्तीर्थनिरपेक्ष एव स्यादतस्तदभिप्रायमाविष्कृत्य दूषयन्नाह—

संपइ तित्थमजुत्तं कुणइ अजुत्तंपि जो उ तद्दूसी । इअ आगमपरमत्थो मत्थयसूलं खु किंमूलो ? ॥२४॥

संप्रति तीर्थमयुक्तं करोति, चकारात्प्ररूपयति च, यस्तु तद्दूषितोऽर्थादवर्णवादी स युक्तमपि—अपिरेवार्थे युक्तमेव करोति, एवं पराभिप्राये सत्युच्यते 'इअ'त्ति इत्यमुना प्रकारेण प्रागुक्तयुक्त्या आगमपरमार्थः—सिद्धान्तरहस्यं मस्तकशूलं—श्रोतृजनस्य मस्तकशूलमिव. किं मूलं यस्य स तथा, कस्माद्गुरोः सकाशादवाप्त एवमाशयनिमित्तोपदेशः ?, कोऽपि गुरुर्नासीत्, किंतु निजमतिविकल्पोत्थः, स च ज्ञानादीनां नाशहेतुरेव, यदागमः—"निसीहअंते अणुकाहयंते, जे आयभावेण वियागरेज्जा । अट्टाणिए हुंति बहूगुणाणं, जो णाणसंकाए मुसं वएज्ज ॥१॥"त्ति श्रीसूत्रकृदिति (५५९*) गाथार्थः ॥ २६ ॥ अथानन्यगत्याऽपि तीर्थमेव यथार्थप्रवृत्तिमदिति दर्शयति—

आगमविरुद्धचारी आगमवंतंपि नित्थमवि हुज्जा । ना को अप्पणो आगमचारीति अ भण्णई लोए ? ॥ २७ ॥

आगमवदपि आगमः–सिद्धान्तो विद्यते यस्य तदागमवद् एवंविधमपि तीर्थंकरनमस्करणीयत्वात्तीर्थंकरादपि बलवद् यदीतिगम्यं यद्यागमविरुद्धचारि–आगमविरुद्धपर्युषणाचतुर्थ्यादि तेन चरितुं शीलमस्येति तत्तथा, आगमविरुद्धचारि स्यात् तर्हि अन्यः–तीर्थाद् व्यतिरिक्तः कोऽपि चागमचारी भण्यते लोके–मनुष्यलोके त्रैलोक्ये वा?, न कोऽपीत्यर्थः, त्रैलोक्यपूज्यमपि तीर्थं यदि प्रवचनविरुद्धं भाषेत प्रवर्तेत वा तर्हि तीर्थमप्यतीर्थं भवेत्, तथा च तीर्थोच्छेदेऽतीर्थभूताः कुपाक्षिका अपि न भवेयुः, सत्येव तीर्थे कुपाक्षिकाणां संभवः, तीर्थोच्छेदे तीर्थाप्रवृत्तौ वाऽन्यतीर्थिका भवन्ति, न पुनर्जमाल्यादयः कुपाक्षिका अपि, नहि वणिजामभावे वणिक्पङ्क्तिबाह्यव्यपदेशभाक् कोऽपि वणिग् संभवति, यस्मिन् सत्येव यस्ततः पृथग्भूय तद्विरुद्धाचारवान् स्यात् स तद्बाह्यो भण्यते, एवं च सति चतुर्थ्याश्रिते तीर्थे विद्यमाने स्तनिकस्तद्रूपपञ्चम्याश्रितस्तीर्थबाह्य इत्यनन्यगत्यैव तीर्थं सम्यगितिगाथार्थः ॥२७॥ अथ तीर्थप्रत्यनीकोऽनन्यगत्या कीदृग् स्यादित्याह––

तत्थ पडिवक्खभूओ तित्थयराइणमहिअपडिवक्खो। सोवि जइ हुज्ज दक्खो मुक्खो दुब्भिक्खमुहवडिओ ॥२८॥

तीर्थप्रतिपक्षभूतः–तीर्थप्रतिकूलक्रियामक्तस्तीर्थकरादीनामपि प्रतिपक्षो–द्वेषी चकार एवार्थे प्रतिपक्ष एव, सोऽपि यदि दक्षो–निपुणो भवेत्तर्हि मूर्खो–जडो दुर्भिक्षमुखपतितः–दुर्भिक्षे येषां क्षयो भवति तन्मुखे प्रथमसमयमेव पतितः, एतावता मूर्खस्य जगति दुर्भिक्षोऽवगन्तव्यः, तथा चानन्यगत्याऽयमेव मूर्खचक्रवर्त्तीतिगाथार्थः ॥२८॥ अथ तीर्थानभिमतवादिनः पातकं गाथाद्वयेनाह—

तित्थपडिकूलवयणं न तावमित्तेण पावहेउत्ति। किंतु अरहंतपमुहा मुसं वयत्तत्थवत्तीए ॥२९॥

नत्तोऽविअ पइसमगं नित्थुच्छेअं पइच्छई पावो। तंदुलमच्छुव्विच्छा पइसमयं णंतभवजणिआ ॥३०॥ "युग्मं"

तीर्थप्रतिकूलवचनं—तीर्थानभिमतप्ररूपणं न तावन्मात्रेण पापहेतुरिति—न तीर्थानभिमतप्ररूपणामात्रपातकहेतुः, किंतु ?, अर्हत्प्रमुखा—अर्हद्गणधरादयः सर्वेऽप्यत्र यावत् सूरयोऽर्थापत्त्या मृषावदा—मृषाभाषिण इति वदति कुपाक्षिक इति गम्यं, तत्रार्थापत्तिस्त्वेवं—यद्यपि तीर्थकरादयो मृषा भाषन्ते इति न साक्षाद् ब्रूते तथाऽप्यच्छिन्नं दुष्प्रसभं यावत् त्रैलोक्यस्यापि तीर्थं पूज्यमिति श्रीवीरेण सौधर्मादिभिश्च भाषितं, तच्च तेषामरुचिविषयोऽर्थापत्त्या तीर्थकरवचस्येवेयमरुचिः, कथं तीर्थकृता वीरेणैतादृशं तीर्थं पूज्यतयोक्तमित्यादिरूपा, सा च तीर्थकरादीनां मृषाभाषित्वसूचिका बोध्या, तच्च महापातकं, ततोऽपि च प्रतिसमयं अयं पापस्तीर्थोच्छेदं प्रतीच्छति, ततस्तन्दुलमत्स्यवदिच्छा—तदभिलापः प्रतिसमयमनन्तभवजनिका—प्रतिसमयं अनन्तकालपरिभ्रमणहेतुबीजभूतं कर्म कुपाक्षिको बध्नाति, न चैतदनुपपत्तिकं, शतवर्षजीविनोऽप्यायुरसंख्येयसमयात्मकं भवति, तादृशोऽप्युत्सूत्रभाषी नियमादाशातनाबहुलोऽनन्तानन्तगुणा अप्युत्सर्पिण्यवसर्पिणीः परिभ्रमति चातुर्गतिसंसारे, ताश्च विभज्यमानाः प्रतिसमयमनन्ता अप्यायान्ति, तत्रापि यस्तन्मनामत्तः क्रियावान् स विशेषतस्तथा बोध्य इतिगाथायुग्मार्थः ॥२९॥ ॥३०॥ अथ लौकिकमिथ्यादृगपेक्षया कीदृग् स्यादित्याह—

तेणाभिनिवेसी अणंतगुणसंकिलिट्ठपरिणामो। लोइअमिच्छ ओ अफासणिज्जो अ सव्वेसिं ॥३१॥

येन कारणेन प्रागुक्तं तेनैव कारणेनाभिनिवेशी—कुपाक्षिको लौकिकमिथ्यात्वाद्—हरिहरादिश्रद्धावतः सकाशादनन्तगुणसंक्लिष्टपरिणामो—मिथ्यात्ववन्धमधिकृत्य महादुष्टपरिणामः, प्रतिसमयं तीर्थहान्यन्वेषणाद्भावतस्तीर्थोच्छेदपातकार्जनात्, सर्वेषामास्तामार्हतानामन्यतीर्थिकानां चोऽप्यर्थे लौकिकमिथ्यादृशामप्यस्पृश्यः, यतो लौकिकमिथ्यात्वं वत्सनागविषकल्पं, तच्च मन्त्राद्युपचारेण सुखसाध्यम्, अभिनिवेशमिथ्यात्वं तु तालपुटविषकल्पमुपायशतैरप्यसाध्यम्, अतस्तत्स्पर्शात् कदाचिल्लौकिकमिथ्यात्वं परित्यज्य

लोकोत्तरमिथ्यात्ववासितो भवेत्तदा पुनर्जन्मान्तरेऽपि दुर्लभबोधिः स्याद् अतः सर्वेषामप्यस्पृश्य इतिगाथार्थः ॥३१॥ अथ मुग्धजनत्रासकं कुपाक्षिकवचनं यथा—

जो पुण पुत्थं तित्थं अहवा पुत्थेण तित्थमुद्धरिअं। इच्चाई वुचंतो पावेसुऽवऽणारिओ णेओ ॥३२॥

यः पुनः कश्चित्कुपाक्षिको लुम्पाकादि तीर्थं पुस्तकं मन्यते, यतः पुस्तकपरंपरयैव सम्यग्मार्गावाप्तिःस्यात्, किं तीर्थेन प्रयोजनमित्यभिप्रायवानित्यर्थः, अथवा पुस्तकेन तीर्थमुद्धृतं, व्यूच्छिन्नमपि तीर्थं पुस्तकं—सिद्धान्तपुस्तकमवाप्य प्रादुष्कृतमस्माभिरित्यादि ब्रुवाणः पापेष्वपि—यावन्तः पापात्मानस्तेष्वपि अनार्यो—नीचो ज्ञेयो, यतस्तथा वक्ता महानृतवादी, स च सर्वपापेभ्योऽप्यधमो भवति, यदुक्तं—"एकत्रासत्यजं पापं, पापं निश्शेषमेकतः। द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥१॥" इत्यादि योगशास्त्रवृत्तौ, तीर्थं च व्युच्छिन्नं तीर्थकरमन्तरेणास्तां पुस्तकादि केवलिनाऽपि प्रादुष्कर्तुमशक्यं, तीर्थव्यवस्थापनेन च तीर्थकराधिक्यप्रसङ्गादिति गाथार्थः ॥३२॥ अथानृतत्वमेव स्पष्टयति—

जइ सवणं मोक्खंगं भणिअं तह णेव कत्थई पुत्थं। जं तं पुरिसायत्तं पुरिसोऽवि परंपरायत्तो ॥३३॥

यथा श्रवणं—धर्मश्रुतिर्मोक्षाङ्गं भणितं, यदागमः "चत्तारि परमंगाणि, दुल्लहाणि अ जंतुणो। माणुसत्तं सुई सद्धा, संजमंमि अ वीरिअं॥१॥" इति, श्रीउत्त०९५। तथा कुत्रचित्—क्वाप्यागमे पुस्तकं नैव—नोक्तमेव, तत्र हेतुमाह—'जं त'न्ति यद्—यस्मात् तत्पुस्तकं पुरुषायत्तं—पुरुषपरतन्त्रं, आस्तां वाचनं, लिखनमपि पुरुषमन्तरेण न स्यात्, तथा च लिखनं शोधनं वाचनं चेति त्रितयमपि पुरुषायत्तं, नहि पुरुषनिरपेक्षं पुस्तकं किंचिदपि स्वानुरूपं पुस्तकं जनयति, नवा शोधयति वाचयति चेति, कथं पुस्तकपरम्परा धर्म-

प्रवृत्तिहेतुः?, तस्मात्पुस्तकं पुरुषायत्तं, पुरुषोऽपि परंपरायत्तः, स्वोत्पत्तौ लिप्यादिशिक्षायां च प्राचीनजनकगुर्वाद्यपेक्षाया अवश्यं भावात्, पुरुषपरम्परा त्वनेन कुपाक्षिकेण नाभ्युपगता, अतः पुस्तकाद्यकिञ्चित्करमेव संपन्नम्, अत्र च काश्चन युक्तयः पर्युषणा-दशशतके दर्शितास्ततोऽवलोक्या इतिगाथार्थः ॥३३॥ अथ पुस्तकमात्रेण तीर्थप्रवृत्तिर्न भवतीति दृष्टान्तयति—

किं गुरुनिरविक्खोविअ वत्थुअसत्थाओ निम्मविज्जावि। जिणपासायप्पमुहं ता कह तित्थंपि पुत्थयओ? ॥३४॥

किं गुरुनिरपेक्षोऽपि-गुरोरपेक्षारहितोऽपि, चशब्दात्तथाविधजातिस्मरणादिविज्ञानराहित्यं बोध्यं, वास्तुकशास्त्राद्-वास्तुकग्रन्थमात्राज्जिनप्रासादप्रमुखं-जिनभवनराजमन्दिरादिकं निर्मापयेद्?, अपि तु न निर्म्मापयेत्, ता-तर्हि पुस्तकात्तीर्थमपि कथं प्रवर्तयेत्?, तत्र पुस्तकमपि कस्यचित्केवलसूत्रसंबन्धि तत्रापि कस्यचित् किञ्चिदित्यत्रापि युक्तयो बह्व्योऽपि स्वधियाऽवगन्तव्याः, किंचिच्च पर्युषणादशशतकादवसेयमितिगाथार्थः ॥३४॥ अथ किं कर्तव्यमित्याह—

तम्हा तित्थे संते धम्मो तित्थंमि न उणमण्णत्थ। तित्थं पुण चाउत्थिअमिह सिद्धं कालगज्जाओ ॥३५॥

यस्मात्पुस्तकं तीर्थप्रवृत्तिमधिकृत्याकिञ्चित्करं तस्मात्तीर्थे विद्यमाने धर्मः-श्रुतचारित्ररूपस्तीर्थे, एवो गम्यः, तीर्थे एव, न तु णमित्यलङ्कारे यद्वा न पुनरन्यत्र, तीर्थादन्यत्र धर्मो न भवत्येवेत्यर्थः, तीर्थं पुनरिह-भरतक्षेत्रे कालकाचार्यात्-कालकसूरेरारभ्य चातुर्थिकं सिद्धं, एवकारोऽत्राप्यध्याहार्यः, भाद्रपदसितचतुर्थीपर्युषणाश्रितमेव सर्वजनप्रतीतं निशीथचूर्ण्यादिभ्योऽवसातव्यमिति गाथार्थः ॥३५॥ अथ चतुर्थीप्रवर्त्तनादन्यत्किं जातमित्याह—

तइअओ चउमासं पक्खिअदिवसंमि सम्मयं तित्थे। एवं कालविसेसे पडिकमणं पंचहा निअयं ॥ ३६ ॥

यद्वशतः—चतुर्थीप्रवृत्तिवशाच्चतुर्मासं पाक्षिकदिवसे तीर्थे सम्मतं, यदुक्तं—"कालगज्जेहिं कारणिआ चउत्थी पवत्तिआ, तव्वसेण य चउम्मासिआणि चउद्दसीए आयरिआणि'त्ति" धर्मोपदेशमालावृत्त्यादौ, यत्तु क्वचित् ठाणावृत्त्यादौ 'तव्वसेण य पक्खिआणि चउद्दसीए आयरिआणि'त्ति लिखितं दृश्यते तद्राकारक्तेन केनचित्पाठः परावर्त्तितो बोध्यः, अत्र च युक्तिः पौर्णमीयकमतनिराकरणे द्वितीयविश्रामे दर्शिता, एवं प्रागुक्तयुक्त्या कालविशेषे प्रतिक्रमणं पञ्चधा—पञ्चप्रकारं नियतं—नियंत्रितमिति गाथार्थः॥३६॥ अथ कालनियतानि पञ्च प्रतिक्रमणान्याह—

देसिअराइअपक्खिअ चउमासिअ वच्छरंनि पंचविहं। पडिकमणं पुण पावा निअत्तणं नामनिष्फत्ती ॥३७॥

दैवसिकं च रात्रिकं च पाक्षिकं च चातुर्मासिकं च सांवत्सरिकं चेति समाहारः, इत्यमुना प्रकारेण पञ्चविधं—पञ्चप्रकारं दिवसादिकालनियतम्, अस्य प्रतिक्रमणस्य नामनिष्पत्तिः पापान्निवर्त्तनं प्रतिक्रमणमिति गाथार्थः ॥३६॥ अथ नाममात्रे पञ्चविधं प्रतिक्रमणं यदुक्त तत्प्रयोजनमाह—

आइदुगे अणुकरणं कुपक्खिआणंपि होइ तित्थेण। अंतिमतिगं तु तित्था बाहिरभावस्स महं चिण्हं ॥३८॥

आदिद्विके-रात्रिकदैवसिक प्रतिक्रमणे कुपाक्षिकाणां तीर्थेन सहानुकरणम्, अपिरेवार्थेऽनुकरणमेव, यथा नटो राजादीनामनुकरणचेष्टापरायणो भवति तथाऽयमपि प्रतिक्रमणादिक्रियया तीर्थानुकरणकारी स्यात्, न त्वनुकरणमात्रेण तीर्थान्तवर्त्ती स्यात्, नटस्यापि राजादिव्यपदेशापत्तेः, अन्तिमत्रिकं तु—पाक्षिकचातुर्मासिकसांवत्सरिकलक्षणं प्रतिक्रमणत्रयं तीर्थाद्बहिर्भावस्य महाचिह्नम्, एतैश्चिह्नैस्तीर्थाद्बहिः प्रायो बालकैरपि ज्ञायत इत्यर्थः, तत्कथमितिचेच्छृणु, दैवसिकं रात्रिकं चेति प्रतिक्रमणद्वयं यथा तीर्थे दिवसरात्र्योः पर्यन्ते करोति

तथा कुपाक्षिकविशेषा अपि, परं यद्यपि तत्प्रतिक्रमणं नाच्छिन्नतीर्थपरम्परागतं, किन्तु निजमतिकल्पितं, तथापि नामकालयोः साम्यात् तीर्थानुकरणं, पाक्षिकप्रतिक्रमणं चानादिसिद्धं तीर्थेन चतुर्दश्यामेव विधीयते, चतुर्मासिकप्रतिक्रमणं तु श्रीकालकाचार्यादारभ्य संप्रति चतुर्दश्यामेव, कुपाक्षिकैस्तु नाममात्रेणापि पाक्षिकचातुर्मासिकप्रतिक्रमणं पञ्चदश्यामेव, तच्च चिह्नं तीर्थाद्बहिर्भावसूचकं कुपाक्षिकाणां स्फुटमेव, यद्यपि कुपाक्षिकविशेषः खरतरश्चतुर्दश्यामेव पाक्षिकं प्रतिक्रमति तथापि चतुर्दशीपाते पञ्चदश्यङ्गीकारेण तत्तुल्य एव, एवं पर्युषणाचतुर्थ्यङ्गीकारेऽपि चतुर्थीपाते पञ्चम्यङ्गीकारेण मासवृद्धौ च श्रावणाङ्गीकारेण च विशेषकुपाक्षिकेभ्यो न भिन्न एवेति बोध्यमितिगाथार्थः ॥३८॥ अथ प्रस्तुतस्याञ्चलिकस्य यैश्चिह्नैस्तीर्थाद्बहिर्भावोऽवगम्यते तेष्वपि विशेषमाह—

जेहंचलिओ तित्थे पायं स्वमणुव्व तित्थबाहिरिओ। पयडो तेसुवि चिण्हेसु तिण्णि पुत्तिप्पमुहयाइं ॥३९॥

यैश्चिह्नैराञ्चलिकस्तीर्थाद् बहिः क्षपणकवत्—पिच्छिकादिचिह्नैः दिगम्बर इव प्रकटो भवति तेष्वपि चिह्नेषु 'पुत्तिप्रमुखकानि' मुखवस्त्रिकाप्रतिक्रमणपर्युषणाचतुर्थीनिषेधरूपाणि त्रीणि चिह्नानि आबालगोपाङ्गनानामपि प्रतीतानीति गम्यमितिगाथार्थः ॥३९॥

अथ प्रतीतचिह्नेष्वपि प्राधान्यमाह—

तेसु भणिएसु भणिअं पायं सयलंपि सेसचिण्हगयं। तत्थवि पोत्तिअचाओ निअअणुगयसावयाईणं ॥४०॥

तेषु—त्रिषु भणितेषु शेषचिह्नगतं सकलमपि प्रायो भणितं बोध्यं, तत्रापि—तेष्वपि निजानुगतश्रावकादीनां मुखवस्त्रिकात्यागो महाचिह्नं तीर्थाद् बहिर्भवने इतिगाथार्थः ॥४०॥ अथ मुखवस्त्रिकात्यागो महाचिह्नं ततः किमित्याह—

तेण मुहवत्तिठावणपगरणमिह वद्धमाणआयरिओ। पुण्णिमपक्खठिओविअ कासी अण्णेसि का वत्ता? ॥४१॥

येन कारणेन तीर्थाद् बहिर्भवन् स्तनिकस्य महच्चिह्नं तेन कारणेनेह मुखवस्त्रिकास्थापनप्रकरणं पूर्णिमापक्षस्थितोऽपि च श्रीवर्द्धमानाचार्यः अकार्षीत्, तथाहि—"मोहतिमिरोहसूरं नमिउं वीरं सुआणुसारेण। साहेमि अ मुहपत्तिं सड्ढाणमणुहट्ठाए ॥१॥ इह केइ समयतत्तं अमुणंता सावयाण मुहपत्तिं। पडिसेहंति जईणं उवगरणमिणंतिकाऊणं ॥२॥ एवं च चीवराणिवि जुंजंति न सावगाण परिहेउं। जम्हा ताणिवि मज्झिमजिणाण उवगरणभूआइं ॥३॥ जं च जइवि फुसंतो पाए मुहणंतएण पच्छित्तं। पावइ किं पुण सड्ढो तं पिअ निअकप्पणामित्तं? ॥४॥" इत्यादि कुलकं ज्ञेयं, न चैवं श्रीवर्द्धमानसूरेरेव प्रवृत्तिः, किंत्वन्येषामपीत्युत्तरार्द्धमाह—'अण्णेसिमि'त्यादि, अन्येषां तीर्थस्थितानां सूरिप्रवराणां का वार्त्ता?, तीर्थबाह्यो राकारक्तोऽपि निजसमुदायाद्बहिर्भूतस्तनिकप्रतिबोधाय मुखवस्त्रिकाव्यवस्थापकं प्रकरणं कृतवान् तर्हि तीर्थवर्त्तिनः सूरयः कुर्वन्ति तत्र किमाश्चर्यमिति भावः, तथाहि—प्रथमं श्रावकाणां श्राविकाणां च प्रतिक्रमणविचारो लिख्यते—यथा "से किं तं लोउत्तरिअं भावावस्सयं?, २ जण्णं समणो वा समणी वा सावओ वा साविआ वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तदज्झवसाणे तदट्ठोवउत्ते तदप्पिअकरणे अण्णत्थ कत्थइ मणं अकुव्वेमाणे उभओकालं आवस्सयं करेति" त्ति(२७) श्रीअनुयोगद्वारसूत्रे, एतद्वृत्तिः—यदिह श्रमणादयस्तच्चित्तादिविशेषणविशिष्टा उभयकालं प्रतिक्रमणाद्यावश्यकं कुर्वन्ति तल्लोकोत्तरिकं भावावश्यकमिति संटङ्कः, तथा 'समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अंतो अहोनिसस्सा तम्हा आवस्सयं नाम ॥१॥ इति श्रीअनुयो॰सूत्रे (२८) अत्र सूत्रे वृत्तौ च साधूनां श्रावकाणां च सदृशमेव षड्विधावश्यकान्तर्गतं प्रतिक्रमणं प्रकटमेवोक्तं, तथा "साविगा एगा मिच्छादिट्ठिअसम दिण्णा, आवस्सयं वेकालिअं करेति, पच्चक्खाइ अ" त्ति श्रीआवश्यकचूर्णौ योगसंग्रहाधिकारे, तथा "असइ साहुचेइआण पोसहसालाए सगिहे वा एवं सामाइअं वा करेति"। श्रीआवश्यकचूर्णौ प्रत्या-

त्रयानाध्ययने, अत्राप्यावश्यकचूर्णौ स्थानद्वयेऽपि षड्विधावश्यकरूपं प्रतिक्रमणं सुव्यक्तमुक्तं श्रावकाणां. षड्विधावश्यकक्रमस्तु श्री-आवश्यकचूर्ण्याद्युक्त एव ज्ञेयः, ननु स साधूद्देशेनोक्तोऽस्ति ततः श्रावकाणां कथं लभ्यते इतिचेदुच्यते,साधूनां श्रावकाणां च षड्विधावश्यकक्रमस्य पूर्वोक्तश्रीसिद्धान्ताक्षरैः सदृशस्यैव लभ्यमानत्वाद् ,उपलक्षणव्याख्या वणाद् ,अन्यथा श्रमण्या अपि तत्क्रमाभावः प्रसज्येत. यथा च—"पंचमहव्वयजुत्तो अणलस माणपरिवज्जिअ मई अ। संविग्गनिज्जरट्ठी किइकम्मकरो हवइ साहू॥१॥"(नि१२०) इति श्रीआवश्यकोक्तवन्दनविधिः साधूद्देशेन निर्दिष्टोऽपि श्रमणीश्रावकश्राविकात्रयस्यापि प्रतिपद्यते तथा षड्विधावश्यकक्रमोऽप्यवश्यं प्रतिपत्तव्यः,केवलं तु श्रावकं प्रतीत्य कुत्रापि समग्रस्य षड्विधावश्यकविधेरन्यत्रानुपलम्भात् , किं च—श्रावकाणां षड्विधावश्यकविधिविषयं विभागं स्वमत्या संभाव्य क्वाप्यागमे पूर्वागमज्ञप्रणीतप्रकरणेषु पूर्वाचार्यपरम्परायां चादृश्यमानानुवादं यः कल्पयति स सतां न प्रमाणं,स्वच्छन्दप्रवृत्तत्वेन श्रीसर्वज्ञाताभङ्गकारित्वादिति १॥ इति मुखवस्त्रिकादेर्यत्कार्यं प्रतिक्रमणादि तद्दर्शितं,तच्च कारणमन्तरेण न भवतीति तत्कारणं मुखवस्त्रिकादीति, दर्शयति श्रावकाणां रजोहरणमुखवस्त्रिकाविचारो यथा—"से किं तं लोउत्तरिअं" इत्यादि प्रागुक्तं, तत्र तदप्पिअकरणेत्ति—'तदर्पितकरणः' करणानि—रजोहरणमुखवस्त्रिकादीनि तस्मिन्—आवश्यके यथोचितव्यापारनियोगेनार्पितानि करणानि येन स तथाविधो, द्रव्यतः स्वस्थानन्यस्तोपकरण इत्यर्थः इतिश्रीअनुयोगद्वारवृत्तौ श्रीवीरनिर्वाणात्सहस्रवर्षसंजातैः श्रीहरिभद्रसूरिभिः कृतायां,तथा "तस्साहणे जाणि सरीररओहरणमुहणंतगाइआणि दव्वाणि ताणि किरिआकरणत्तणओ अप्पिआणि"त्ति श्रीअनु०चूर्णौ,तथा'तदर्पितकरणः' करणानि—तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मिन्—आवश्यके यथोचितव्यापारनियोगेनार्पितानि—नियुक्तानि येन स तथा, अमूनि च तच्चित्तादिविशेषणानि लिङ्गविपरिणामतः

श्रमणीश्राविकयोरपि योज्यानि इति श्रीअनुयो० वृत्तौ मलधारिश्रीहेमचन्द्रसूरिकृतायाम्, अत्र चूर्णौ वृत्तिद्वयेऽपि च तदर्पित-करण इतिविशेषणस्य श्रमणश्रावकादिसंबन्धिनः सदृशमेव व्याख्यानं कृतं त्रिभिरपि ग्रन्थकृद्भिः, तत्र करणशब्दस्य रजोहरणमुखवस्त्रिकादिरूप एवार्थः प्रदर्शितः, तथा—अवणामा दुन्नऽहाजायं, आवत्ता बारसेव उ। सीसा चचारि गुत्तीओ, तिन्नि दो अ पवेसणा॥१॥ एगनिक्खमणं चेव पणवीसं विआहिआ। आवस्सएहिं परिसुद्धं, किइकम्मं जेहिं कीरइ ॥२॥ किइकम्मंपि कुणंतो न होइ किइकम्मनिज्जराभागी। पणवीसामन्नयरं साहू ठाणं विराहंतो ॥३॥ इति श्रीआवश्यकनिर्युक्तौ (१२१५–६–७) दुओणयं जाए वेलाए पढमं वंदति ताहे निप्फिडिऊणं वंदइ, जहाजायं सामण्णे जोणिनिक्खमणे अ, सामण्णे रयहरणं मुहपत्तिआ चोलपट्टो अ, जोणिनिक्खमणे अंजलिं सीसे काऊण नीइ' इति श्रीआवश्यकचूर्णौ, एवं श्रीअनुयोगद्वारेषु षड्विधावश्यकक्रिया मुखवस्त्रिकारजोहरणादिन्यासपूर्विका प्रोक्ता, वन्दनकनिर्युक्ताविह यथाजातावश्यकं रजोहरणमुखवस्त्रिकाऽविनाभूतं दर्शितं, तच्च साधूनां श्राद्धानां च शेषचतुर्विंशत्यावश्यकवत् प्रायः समानमेव युज्यते, श्राद्धानेव केवलानाश्रित्य वन्दनकविधेः क्वापि सिद्धान्तेऽनुपलम्भात्, नचैवं श्रावकाणां चोलपट्टोऽपि प्रसज्येतेतिवाच्यं, यतो यथाजातावश्यकं सामान्येनोक्तमपि पूर्वाचार्यसंप्रदायात् किंचिद्विशेषेणैव ज्ञेयं, अन्यथा श्रमण्या अपि मुखवस्त्रिकावच्चोलपट्टः प्रसज्येतेत्यलमतिप्रसङ्गेन। तथा "सो अ किर सामाइअं करिंतो मउडं अवणेति, कुंडलं नाममुद्दं पुप्फतंबोलं पावारमाई वोसिरति" श्रीआवश्यकस्य वृत्तौ तच्चूर्णौ च "उत्तरिअं नाम पाउरणं" श्रीनिशीथचूर्ण उद्देसे १४, अत्र श्रीआवश्यकचूर्णौ वृत्तौ चोत्तरीयमोचनेन सामायिकग्रहणविधिः श्रावकाणां साक्षात्कथितोऽर्थापत्त्या मुखवस्त्रिकाग्रहणं ज्ञापयति, तथा 'तएणं से कुंड कोलिए समणोवासए अण्णया कयाई पुव्वावरण्हकालसमयंमि जेणेव असोगवणिआ जेणेव पुढविसिलावट्टए तेणेव उवा-

गच्छइ,नाममुद्दगं च उत्तरिज्जगं च पुढविसिलावट्टए ठवेइ२ समणस्स भगवओ महावीरस्स अंतिअं धम्मपन्नत्ति उवसंपज्जित्ताणं विहरति" श्रीउपासकदशाङ्गषष्ठाध्ययने,अत्रैव देवपरीक्षानन्तरं "तेणं कालेणं सामी समोसढे,तए णं से कुंडकोलिए इमीसे कहाए लद्धट्ठे हट्ठे जहा कामदेवो तहा निग्गच्छइ जाव पज्जुवासइ" उपास०६अध्ययने,कामदेवश्च गृहीतपौषध एवात्रैव द्वितीयाध्ययने एवं निर्गतो यथा—"तए णं से कामदेवे इमीसे कहाए लद्धट्ठे समाणे एवं खलु समणे जाव विहरइ,तं सेअं खलु ममं समणं भगवं महावीरं वंदित्ता नमंसित्ता तओ पडिनिअत्तस्स पोसहं पारित्तएत्तिकट्टु एवं संपेहेइ" इत्यादि, इह कुण्डकोलिकेन मुक्तोत्तरीयेन मुखवस्त्रिकादिना गृहीतपौषधेन धर्मानुष्ठानं कृतम् ,अन्यथा कामदेवोपमानेन तत्पारणाभिप्रायो न घटते,तथाहि अवट्टि (वहट्टु) कुसुमसेहर मुव्वयद्वाहिगारमज्झंमि । ठवणायरिअं ठविउं पोसहसालाइ पुण सीहो ॥१॥ उम्मुक्कभूसणो सो इरिआइपुरस्सरं च मुहपत्तिं । पडिलेहंतो पच्छा चउव्विहं पोसहं कुणइ ॥२॥ इति व्यवहारचूलिकादौ सिंहश्रावकस्य स्थापनाचार्यस्याग्रे मुखवस्त्रिकयैव पौषधग्रहणविधिः प्रकटमेव भणितः,तथा श्रीआवश्यकनिर्युक्तौ वन्दनकाध्ययने "अक्खे वराडए वा कट्ठे पुत्थे अ चित्तकम्मे अ । सब्भावमसब्भावं ठवणाकायं विआणिज्जा ॥१॥" (१५२९) इत्यनया गाथया गुरोरभावे स्थापनाचार्याग्रे वन्दनादिकर्त्ता मुख्यवृत्त्या साधुरेवोक्तः, यथा "पंचमहव्वयजुत्तो अणलस माणपरिवज्जिअमईओ । संविग्गनिज्जरट्ठी किइकम्मकरो हवइ साहू ॥१॥" परं साधुवच्छ्रावकेणापि वन्दनकं दीयते, न च तस्य रजोहरणं क्वापि सिद्धान्ते भणितं, मुखवस्त्रिका त्वनेकेषु स्थानेषु भणिता,अञ्चलेन पुनर्वन्दनकं क्वापि न दृश्यते,यच्च कृष्णवासुदेवदृष्टान्तस्तैर्भण्यते तत्रापि यथा मुखवस्त्रिकया वन्दनकं न भणितं तथाऽञ्चलेनापि नोक्तं, यत्तु 'भमइ पुत्तस्स अंतेणं'ति आवश्यकचूर्ण्यक्षराणि दृष्ट्वा पुत्तशब्देन भ्रान्ताः सन्तस्तेऽञ्चलेन वन्दनकं वदन्ति तत्रापि ते मुग्धाः

प्रस्तावं न विदन्ति,यतः तत्र सामायिकव्रतविवरणे सामायिकग्रहणानन्तरं "अह घरे तो से उवग्गहिअं रयहरणं अत्थि,तस्स असइ पोत्तस्स अंतेणं"ति अक्षराणि सन्ति, तेषामयमर्थः–अथ गृहे सामायिकं करोति तदा तस्यौपग्रहिकं रजोहरणमस्ति, तेन भुवं प्रमार्जयति,तस्यौपग्रहिकरजोहरणस्य असइत्ति असत्त्वेऽभावे तस्य वस्त्रस्यान्तेन–अञ्चलेन संस्तारकादिभुवं प्रमार्जयति,एतैरक्षरैः स्वाध्यायसंस्तारकादिभूमिप्रमार्जनमेवोक्तं,न वन्दनादि, किंच–पुत्तशब्देन मुखवस्त्रिकापि भण्यते, यत आवश्यकनिर्युक्तावुक्तं–"वासत्ताणावरिआ निक्कारण ठंति कज्ज जयणाए। हत्थत्थंगुलिसन्ना पुत्तावरिआ व भासंति॥१॥"(नि०१४२७) किंच वन्दनकभाष्येऽपि श्रावकस्य मुखवस्त्रिकायामेव वन्दनादिविधिरुक्तः, तथाहि–"न य विच्छिणं वामगजाणुं निसिऊण तत्थ मुहपत्तिं। रयहरणमज्झभागंमि ठावए पुज्जपायजुगं॥१॥ एवं सुसावओऽविहु दुवालसावत्तवंदणं दिंतो। मुहपुत्तिमज्झभागंमि ठावए पुज्जपायजुगं॥२॥" इति। अथ स्तनिकेन श्राद्धानां मुखवस्त्रिकानिषेधवत्स्थापनाचार्यस्थापनमपि प्रतिषिद्धमतः प्रसङ्गतस्तदप्याशङ्क्य निराकरणं (क्रियते), यथा ननु किं श्रावकस्यापि काप्यागमे स्थापनाचार्यस्थापनमस्ति ?,अस्तीति ब्रूमः–गुरुविरहंमि अ ठवणा गुरूवएसोवदंसणत्थं च। जिणविरहंमि य जिणबिंबसेवणामंतणं सहलं॥१॥ रण्णुव्व परुक्खस्सवि जह सेवा मंतदेवयाए वा। तह चेव परुक्खस्सवि गुरुणो सेवा विणयहेऊ॥२॥ इत्यादि (३४६५) विशेषावश्यकादिवचनप्रामाण्यात्, अथ यतिसामायिकप्रस्तावे भदन्तशब्दं व्याख्यानयता 'गुरुविरहंमी'त्यादि भाष्यकृता साधुमाश्रित्योक्तं न श्रावकमितिचेत्तर्हि प्रष्टव्योऽत्र भवान्–किं श्रावकः सामायिकमुच्चरन् भदन्तशब्दं भणति न वा ?, यदि भणति तर्हि साधुवत्साक्षाद्गुरोरभावे सोऽपि स्थापनाचार्यं स्थापयति, उभयत्रापि न्यायस्य समानत्वाद्, द्वितीयस्तु पक्षो न घटते एव, भदन्तशब्दवर्जसामायिकस्यार्हतैरनोच्चरणीयत्वादिति, किंच–यदि सकलसिद्धान्तसद्भाव-

विज्ञेन समग्रसामाचारीसमाचरणचतुरेणापि साधुना गुरोरभावे स्थापनाचार्यस्य पुरत एव यथोदितकृत्यं क्रियते यथा "भरुअच्छंमि अ विजए नडपिडए वासनाग नागहरे। ठवणा आयरिस्सा सामायरी पउंजणया ॥१॥ (आव० नि० १४१३) तर्हि तथाविधविशदसमयसारविचारचतुरचेतस्केन सदाऽन्योऽन्यकार्यकदम्बकप्रवणमनस्केनोपासकेन सुतरामेतद्विधेयमित्यागमप्रमाणमुपदर्श्य युक्तिमपि दर्शयामः, तथाहि—यदि स्थापनाचार्यमन्तरेणापि वन्दनाद्यनुष्ठानं विधीयते तदा यद्वन्दनकनिर्युक्तौ "आयप्पमाणमित्तो चउद्दिसिं होइ उग्गहो गुरुणो" (१२३३ वृत्तौ) इत्याद्यक्षरैरवग्रहणप्रमाणमुक्तं तत्कथं घटामियर्ति ?, नहि गुर्वभावे गुरुगतावग्रहप्रमाणं घटमानकं स्यात्, ग्रामाभावे तत्सीम्नो व्यवस्थावत्, तथा तत्रैव यदपरमुक्तं 'चउसिरं तिगुत्तं च दुपवेसं एगनिक्खमणं" (१२१४) इत्यादि, तदपि न युक्तं भवेत्, यतश्चतुःशीर्षत्वं वन्दनकदातृतत्प्रतीच्छकयोः सद्भावे सति संभवति, तच्च स्तनिकाभिप्रायेण कथं युज्यते ?, साक्षाद्गुर्वभावे स्थापनाचार्यस्यानभ्युपगमात्, द्विप्रवेशैकनिष्क्रमणविचारणा तु गुरोरभावेऽवधिभूतस्थापनाचार्यस्थापनानिर्गमप्रवेशाभावेन दूरापास्तैव, अथैतद्दोषपरिजिहीर्षुः परः प्रेरयति—ननु वयमपि हृदयमध्ये गुरुं स्थापयामस्तन्नश्च सर्वं सुस्थं, हंहो तदपि खरविषाणे लावण्यवर्णनमिव केवलप्रयासहेतुरेव, हृदयमध्यवर्त्तित्वाद् गुरोर्वन्दनकदात्रा सहैव संचरणात् न कथंचिदपि तद्दातुर्निर्गमप्रवेशौ स्यातां, तदसत्त्वे च न पञ्चविंशत्यावश्यकसंपूर्तिः, तदसंपूर्तौ च वन्दनकाशुद्धिः, एवमपाकृतः सन् भूयोऽपि मुखरतया परो ब्रवीति—ननु न केवलं वयं हृदयमध्ये एव गुरुं व्यवस्थापयामः, किं तर्हि निकटतरवर्त्तिकटकुड्यादावपि स्थापयित्वा तद्विधापयामः, हन्तैवं ब्रुवता भवताऽपि शून्यहृदयतया 'अक्खे वराडए वा कट्ठे पुत्थे अ चित्तकम्मे अ। सब्भावमसब्भावं ठवणायरिअं विआणाहि ॥१॥ इत्यागमवचनात् स्वमुखेनैव स्थापनाचार्यस्थापनाऽस्मदभीष्टाऽमन्यत, तस्माच्छ्रा-

चक्रेणापि वन्दनादिकं चिकीर्षुणा गुरोरभावे साधुवत् स्थाप्य एव स्थापनाचार्यः,इत्येवं सिद्धान्तप्रमाणेन युक्तिबलेन च स्थापितेऽपि स्थापनाचार्ये निजानल्पकुविकल्पसंकल्पितकुयुक्तिशतं मुग्धजनप्रतारणपरः परः प्रजल्पति यथा देशान्तरस्थितं गुरुं वयमपि व्यवस्थाप्यैवानुष्ठानं कुर्मो, नान्यथा, ततश्च नावश्यभावादिदूषणानुषङ्गः, मैवं वोचः,एवं हि गुर्वनुष्ठानकर्त्रोरन्तरा गजाश्वरथपदातिकोटीसंटंककर्कटकादिसंचरणादिना षड्विधावश्यके कायोत्सर्गादिष्वनेके उच्छेदनकादयो दोषाः प्रसज्येयुरित्यलं कदाग्रहग्रहकदर्थितचेतसा सममतिप्रसङ्गेनेति स्थापनाचार्यस्थापनेत्यादि अनेकयुक्तिभिः पूर्वाचार्यैर्मुखवस्त्रिकादिव्यवस्थापनं कृतमिति गाथार्थः॥४१॥

अथ मुखवस्त्रिकाविचारे कथिते सर्वमपि तन्मतसंबन्ध्युक्तमेवेति दर्शयति—

सच्छंदमइविगप्पिअमयमूलुच्छेदगं जिणिंदुत्तं। इक्कंपि जुत्तिजुत्तं नाहिमयं किं बहूहिंपि ?॥४२॥

स्वच्छन्दस्य—गुरुपारन्तत्र्यविरहितस्य या मतिः—बुद्धिः यद्वा भावनिर्देशात्स्वच्छन्दत्वेन या मतिस्तया विकल्पितं यन्मतं—कुपाक्षिकमार्गस्तस्य यन्मूलं—प्रथममुत्सूत्रं क्षपणकानां नाग्न्यव्रतं १ पौर्णिमीयकानां पूर्णिमापाक्षिकं२ औष्ट्रिकाणां स्त्रीजनपूजानिषेधः३ स्तनिकानां मुखवस्त्रिकानिषेधः४ सार्द्धराकानां फलादिपूजानिषेधः५ आगमिकानां श्रुतदेवतास्तुतिनिषेधः६ लुम्पाकानां प्रतिमानिषेधः७ कटुकानां संप्रति साधुदर्शनाभावः८ बन्ध्यानामागमिकवच्छ्रुतदेवतानिषेधः९ पाशस्य निद्रादिकरणे साधूनां जिनोपदेशनिषेधः१० इत्यादि, तस्योच्छेदकं तादृक्प्ररूपणाविषपराकरणामृतकल्पं जिनेन्द्रोक्तमेकमपि युक्तिप्रयुक्तं—विचार्यमाणं युक्तिक्षमं नाभिमतं—न सम्मतं,यद्यप्येतदागमे भणितं परमन्यत् किमपि सिद्धान्तवचनं दर्शयन्त्वित्यादिवचोभिः प्राक् प्रदर्शितवचने रुचिर्न भवेत्, ज्ञातधर्मकथाङ्गोक्तद्रुपदीकृतजिनपूजोपेक्षकलुम्पाकवत्. किं बहुभिरपि वचनैः? स्यात् तादृक्पुरुषस्य सिद्धान्तवचनशतैरपि, किमपि न

स्यादित्यर्थ इतिगाथार्थः, ॥४२॥ अथ सिद्धान्तिकवचनारुचिकस्य बहुभिरपि किमपि न स्यादित्यत्र दृष्टान्तमाह–

इक्कंमि पईवंमि अ दीवंते नेव पासई किंची। लोअणसत्तिविमुक्को पईवकोडीहिं किं तस्स? ॥४३॥

योऽयमर्थः, एकस्मिन्नपि प्रदीपे दीप्यमाने किंचिन्न पश्यति, तत्र हेतुमाह–यतः सः 'लोचनशक्तिविमुक्तः' लोचनयोः–अक्ष्णोर्या शक्तिः–वस्तुरूपविषयकज्ञानजनकशक्तिस्तया विमुक्तो–विशेषेण मुक्तः–सर्वथा दृक्तेजोरहितस्तस्य पुरुषस्य प्रदीपकोटिभिरपि किं?, न किमपीत्यर्थः, इतिगाथार्थः ॥४३॥ अथ दार्ष्टान्तिकमाह–

एवमणुओगवयणं पुत्तिरयहरणपयासयं पयडं। इक्कंपि दीवकप्पं उम्मीलिअनयणसंणीणं ॥४४॥

एवमनुयोगवचनं–'से किं तं लोउत्तरिअं भावावस्सयं?' इत्यादि प्रागुक्तं श्रीअनुयोगद्वारसूत्रवाक्यं, कीदृशं?–मुखवस्त्रिकारजोहरणप्रकाशकं–श्रावकधर्मेऽपि रजोहरणमुखवस्त्रिकाद्युपकरणं प्रतिक्रमणक्रियोपयोगि भणितं, कथं?–'प्रकटं' स्पष्टं, न पुनरव्यक्तम्, एतद्वचनमेकमपि 'दीपकल्पं' प्रदीपकल्पं–प्रदीपतुल्यं, केषाम्?–उन्मीलिते–उद्घाटिते नयने–लोचने येषां ते उन्मीलितनयनास्ते च ते संज्ञिनश्चेति समासः, उद्घाटितलोचनोऽपि यद्यसंज्ञी स्यात्तदा न किंचिदभीष्टार्थसिद्धिः, संज्ञ्यपि यदि निमीलतिलोचनो लोचनरहितो वा स्यात्तथाप्यकिञ्चित्कर इति द्वयोरपि विशेषणयोः प्रयोजनमिति गाथार्थः ॥४४॥ अथ स्तनिकस्य विंशत्या दिनैः पर्युषणाकरणे प्रयोजनमाह–

जं पुण वीसदिणेहिं पज्जोसवणाऽभिवड्ढिए वरिसे। तं तित्थवज्झवज्झो सयंति पच्चायणट्ठाए ॥४५॥

यत्पुनः अभिवर्धिते वर्षे विंशत्या दिनैः पर्युषणा तत्स्वयमहं तीर्थबाह्यबाह्य इति प्रत्यायनार्थं बोध्यं, तीर्थबाह्यो राकापक्षस्त-

तोऽप्ययं वाह्य इति जनानां प्रत्यायनार्थं विंशत्या दिनैः पर्युषणेतिभावः,यद्वा सर्वेऽपि कुपाक्षिकाः प्रवचनवाह्यास्ते च परस्परं कथं-चिद्विप्रतिपन्ना अपि पञ्चाशता दिनैरेव पर्युषणां कुर्वन्ति, अयं तु तेभ्योऽपि वैलक्षण्यसूचकं विंशत्या दिनैरेव पर्युषणाकरणेन सर्व-कुपाक्षिकेभ्यः स्वात्मानं वाह्यं ज्ञापयतीति भाव इतिगाथार्थः ॥४५॥ अथ विंशत्या दिनैर्यद्भणितं तदाह—

जं तं साभिग्गहिअं पञ्चगहाणोइ जाव पंचासा । अभिवड्ढिए उ वीसा निअमाभावेण मुणिवयणं ॥४६॥

यद्—यस्मात्तत् स्वाभिग्रहिकं पञ्चकहान्या तावत् क्रियते यावत्पञ्चाशद्दिना भवन्ति,अभिवर्द्धिते तु—अभिवर्द्धितवर्षे तु विंशतिर्दिनाः स्वाभिग्रहिकं भवति, तत्र नियमाभावेन मुनिवचनं स्यात्, पृच्छतां गृहस्थानां पुरस्तात्तिष्ठामो नवेति संदिग्धमेव साधवो वदन्तीति, स्वयं निश्चयेऽपि गृहस्थसाक्षिकनिश्चयाभावात्स्वाभिग्रहिकं भण्यते इति गाथार्थः ॥४६॥ कथमभिवर्द्धिते विंशतिदिनेभ्योऽन्यथा पञ्चाशद्दिनेभ्यश्च गृहिज्ञातमेव भवतीति दर्शयति—

तत्तोवि परं निअमं भासंतो नाहिगरणदोसमुणी । इअ भासगाहअत्थो चुण्णीए वण्णिओ पयडो ॥४७॥

ततः—प्रागुक्तात् स्वाभिगृहीतकालात् परं नियमं—गृहस्थानां पृच्छतां पुरो वयमत्र स्थिताः स्म इति निश्चयं भाषमाणो नाधिकरणदोषमुनिः स्याद्—अधिकरणदोषभाग् साधुर्न भवेद् इति—अमुना प्रकारेण भाष्यगाथार्थो भणितः, क ?—चूर्णौ—निशीथचूर्णौ प्रकटः—स्पष्टः,तथाहि—"इत्थ उ अणभिग्गहिअं वीसइराइं सवीसइमासो। तेण परमभिग्गहिअं गिहिणायं कत्तिअं जाव॥१॥ असिवाइ-कारणेहिं अहवा वासं न सुट्ठु आरद्धं। अभिवड्ढिअंमि वीसा इअरंमि सवीसईमासो॥२॥ इति श्रीनिशीथभाष्ये उद्दे०१०। एत-च्चूर्णिर्यथा "इत्थ उ"गाहा,इत्थत्ति—आसाढपुण्णिमाए,सावणबहुलपंचमीए पज्जोसविएत्ति अप्पणा अणभिग्गहीअं,अहवा जइ गिह-

स्था पुच्छंति-अज्जो! तुब्भे इत्थ वरिसाकालं ठिआ अह न ठिआ ?, एवं पुच्छिएहिं 'अणभिग्गहिअं'ति संदिग्धं वक्तव्यम्, इहान्यत्र वा नाद्यापि निश्चयो भवतीत्यर्थः, एवं संदिग्धं कियत्कालं वक्तव्यम् ?, उच्यते-'वीसइरायं'ति जइ अभिवड्ढिए वरिसे तो वीसतिरातं जाव अणभिग्गहिअं, अह चंदवरिसे तो सवीसतिरातं मासं जाव अणभिग्गहितं भवति. तेणं-तत्कालात्परतः अप्पणो आभिमुख्येन गृहीतमिह व्यवस्थिता इति, गिहीण य पुच्छंताण कहेति-ठिआ मो वरिसाकालंति, किं पुण कारणं वीसतिराते सवीसतिराए मासे वा गए अप्पणो अभिग्गहिअं गिहिणायं करेंति आरतो न करेंति ?, उच्यते, 'असिवा' गाहा, कदाचि असिवं भवे, आदिग्गहणातो रायदुट्ठादी, वासं वा न सुट्ठु आरद्धं वासिउं, एवमाइएहिं कारणेहिं जइ अच्छंति तो अहिगरणादिदोसा, अह न अच्छंति तो गिहत्था भणंति-एते सव्वण्णुपुत्तगा न किंचि जाणंति, लोगो घरादीणि छादेति, हलादिकम्माणि वा संठवेति, अभिग्गहिए गिहिणाए अ आरओ कए जम्हा एवमाइआ अहिगरणादिदोसा तम्हा अभिवड्ढिअंमि वरिसे वीसतिराते गते गिहिणातं करेंति, तिसु चंदवरिसेसु सवीसतिराते मासे गते गिहिणातं करेंती'ति निशीथचू० १०३०, अयमभिप्रायः-श्रावणेऽप्यष्टमतपश्चैत्यपरिपाटिसांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टं पर्युषणापर्व न कर्त्तव्यमिति गाथार्थः ॥४७॥ अथाष्टमतपःप्रभृतिकृत्यविशिष्टा, पर्युषणा कदा कर्त्तव्येत्याह—

जं पुण पज्जोसवणा पव्वं सव्वेसिं सम्मयं समए। तं भद्दवए मासे चउत्थिदिणे नन्नहा मेरा ॥४८॥

यत्पुनः सर्वेषामाबालगोपाङ्गनानामपि समये-प्रवचने पर्युषणापर्व सम्मतं-प्रतीतं तद्भाद्रपदे मासे चतुर्थीदिनेऽर्थाच्छ्रीकालकाचार्यादारभ्य दुप्पसहं यावत्संप्रतिकाले भवतीति, अन्यथा मेरा-मर्यादा न स्यात्, किंच-कल्पागमे श्रावणमासविशिष्टं पर्युषणा-

पर्वेत्युक्तं नास्तीति गाथार्थ ॥४८॥ अथ संप्रति पञ्चकहान्या कथं न क्रियते इत्याह—

संपइ पंचगहाणीपमुहविही संघवयणओ छिन्नो। साभिग्गहगिहिणायं उभयंपि अ भद्दवइ भद्दं ॥४९॥

संप्रति-वर्त्तमानकाले पञ्चकहानिप्रमुखविधिः संघवचनतः-तीर्थाग्रहाद् व्युच्छिन्नः, अत एव क्वचिदियं गाथापि-"वीसहिं दिणेहिं कप्पो पंचगहाणीइ कप्पठवणा य। नवसयतेणउएहिं वुच्छिन्नं संघआणाए ॥१॥"त्ति, तस्मात्स्वाभिग्रहगृहिज्ञातमुभयमपि-स्वाभिगृहीतं गृहिज्ञातं चेति द्वितयमपि भाद्रपदे-भाद्रपदचतुर्थ्यां भद्रं-मङ्गलं तीर्थाभ्युपगतत्वादिति गाथार्थः॥४९॥ अथ स्तनिकस्य ग्रथिल्यसूचकं यथाच्छन्दत्वमाह—

किं चागमंमऽणुत्तं तित्थाणुमयंपि तत्थ अहछंदो। एअं सुंदरमेवं नेवंति मई महापावं ॥५०॥

स्तनिकमते श्रीहरिभद्रसूरिप्रभृतीनां पूर्वाचार्याणामनङ्गीकाराद् वृत्तिप्रकरणचरित्राद्यनङ्गीकाराच्च लुम्पाकवत् सिद्धान्तोऽपि केवलसूत्र रूप एव, तत्र-"सुत्तं गणहररइअं१ तहेव पत्तेअबुद्धरइअं च२। सुअकेवलिणा रइअं३ अभिन्नदसपुव्विणा रइअं४ ॥१॥"ति गाथा न सिद्धान्तोक्ता, किंतु बृहत्संग्रहिणीगता, संग्रहिणी च पूर्वाचार्यरचितं प्रकरणमिति माता मे वन्ध्येति न्यायमापन्नः सन् तदीयामेव तां गाथां पूत्कुर्वाणोऽपि न लज्जते, तथा केवलसूत्रवादी मिथ्यादृष्टिरेव भवति, यदागमः-"अपरिच्छिअसुअनिहसस्स केवलमभिन्नसुत्तचारिस्स। सव्वुज्जमेणवि कयं अण्णाणतवे बहुं पडइ॥१॥ जह दाइअंमिवि पहे तस्स विसेसे पहस्सऽयाणंतो। पहिओ किलिस्सइ च्चेअ तह लिंगायारसुअमित्ते ॥२॥ (४१५-६) श्रीउपदेशमालायाम्, अत्र दिग्मात्रमार्गदर्शको यथा पथिकं क्लेशयति तथा केवलसूत्रवादी धर्मश्रोतारं संसारे पातयतीति वृत्ताद्युक्तम्, अत्र युक्तिस्तु पर्युषणादशशतकटीकातो ज्ञेया, एवं

मत्यपि 'किंचे'ति दूषणाभ्युच्चये, आगमेऽनुक्तं—स्तनिकाभिमतागमे क्वापि नोक्तं तीर्थानुमतं—तीर्थस्य सम्मतं तत्र यथाच्छन्दः—स्वेच्छाचारी यत एवं तदेवं सुन्दरमेवं च नेति मतिः, सा न मतिर्महापापं, केवलिनामपि वाचामगोचरगतिकम्, अयं भावः—तीर्थाभिमतं तदभिमतसिद्धान्तानुक्तं चेति ज्ञात्वाऽपि सिद्धान्तोक्तकारित्वमात्मनो मन्यमानः किंचित्स्वीकरोति किंचिच्च नेति यथाच्छंदत्वं शाथिल्यसूचकं, तथाहि—चैत्यवन्दनकायोत्सर्गेऽष्टोच्छ्वासमानं ललितविस्तरावृत्तौ श्रीहरिभद्रसूरिभिरेवोक्तं, न पुनः क्वापि तदभिमतसिद्धान्ते १ श्राद्धानामालोचनायां प्रायश्चित्तदानविधिः प्रकरणेष्वेवोक्तः २ श्राद्धानामीर्यापथिकादिसूत्रपठनं साधुसदृशं न सिद्धान्तोक्तं ३ श्राद्धानां वन्दनके द्वादशावर्त्तविधिर्न सिद्धान्तोक्तः 'किइकम्मकरो हवइ साहु'त्ति वचनात् ४ पौषधग्रहणविधिः पारणकविधिश्च नागमोक्तः ५ तथा पौषधोच्चारदण्डकविधिर्ग्रन्थिकसामायिकविधिश्च न सिद्धान्तोक्तः ५ सामायिकदण्डकोऽपि चूर्ण्यादिषूक्तोऽपि 'दुविहं तिविहेण'मित्येवास्ति, न पुनर्मणेणमित्यादि व्यक्तिः ६ साधुसाध्वीनां मुखपोतिकाप्रतिलेखनविधिर्भिन्नः क्वाप्युक्तो नास्ति ७ योगविधिराचार्यपदवाचकपदप्रतिष्ठाविधिः सूरिमन्त्रसाधनविधिश्चेति न सिद्धान्तोक्तः ८ श्राद्धादिसमक्षं पर्युषणाकल्पकर्षणलौकिकटिप्पनकोपरिदीक्षादानपर्युषणादिकरणं चेत्यादिकं तीर्थाभिमतमेव क्रियते, न पुनः सिद्धान्तोक्तं ९, तथा प्रतिक्रमणसूत्रं १ पुक्खरवरदी २ सिद्धाणं बुद्धाणं ३ तृतीयादिसामायिक ४ पर्वान्यदिनपौषधः ५ सिद्धान्तवृत्ति ६ तीर्थकरादिचरित्र ७ श्रीहरिभद्रसूरिप्रमुखरचितप्रकरण ८ श्रीहरिभद्रसूरिप्रमुखगीतार्थ ९ यतिप्रतिष्ठा १० आरात्रिक ११ कुसुमाञ्जलि १२ जिनाग्रप्रदीप १३ चतुर्विंशतिजिनपट्टक १४ नवग्रहसंयुक्तजिनप्रतिमा १५ पञ्चकल्याणीप्रतिमा १६, क्षामणदण्डकादीनां तीर्थाभिमतानामपि सिद्धान्तानुक्तत्वेन हेतुना परित्यागवचनानि त्वपरिमितानि लिखितुमशक्यानि स्वधिया बोध्यानीति गाथार्थः ॥५०॥ अथोक्तप्रकारेण स्तनिकस्योपलक्षणादन्येषामपि तीर्थमन्तरेण नान्यत्किमपि शरणमिति केन प्रकारेण तीर्थान्तर्वर्त्ती स्यात् केन च तीर्थबाह्य इति बिभणिषुः प्रथमप्रकारमाह—

जं जं जेणं जेणं रूवेणं तित्थसम्मयं समए। तं तेण सरूवेणं रीअंतो तित्थमज्झत्थो ॥५१॥

समये–जैनप्रवचने यद्यद्वस्तु येन येन रूपेण तीर्थसम्मतं–तीर्थेनाङ्गीकृतं, यथा भाद्रपदसितचतुर्थीपर्युषणा पर्व्वत्वेनाभ्युपगता तीर्थेन, तद्वस्तु तेन स्वरूपेण रोचयन्–रुचिविषयीकुर्वन् श्रद्धधदित्यर्थः स तीर्थमध्यस्थो भवति–तीर्थान्तर्वर्त्ती स्यादिति गाथार्थः॥५१॥ अथ सामान्येन तीर्थान्तर्वर्त्तित्वमभिधाय तीर्थबाह्यत्वं प्रकृतं स्तनिकमधिकृत्य विशेषेणाह—

तित्थाओ विवरीअं थणिअमयं तं थणिअविवरीअं। एवंपि धम्मपिम्मं निक्कारणकज्जउप्पत्ती ॥५२॥

तीर्थाद्विपरीतं स्तनिकमतम्–आञ्चलिकमतं 'तंपि'त्ति तीर्थमपि स्तनिकविपरीतं–स्तनिकमताद्विपरीतस्वरूपं, चरणप्ररूपणाभ्यामन्योऽन्यं प्रतिपक्षतैवेत्यर्थः, यद्यप्येकप्रतिक्षताभणनेन द्वितीयप्रतिपक्षता सिद्ध्यति तथापि बुधचन्द्रयोरिवैकपाक्षिक्या अपि प्रतिपक्षतायाः संभवात् तन्निरासार्थं उभयप्रतिपक्षता दर्शिता, स्तनिको हि तीर्थच्छायामिच्छन्नेव तीर्थं दूषयति, तीर्थं तु स्तनिकादिसमुदायस्तीर्थप्रतिपक्षभूतो दृष्ट एव संसारवृद्धिहेतुरित्युपदिशति, यदागमः–"जे जिणवयणुत्तिण्णं वयणं मासंति जे उ मण्णंति। सद्दिट्ठीणं तद्दंसणंपि संसारवुड्ढिकरं ॥१॥"ति श्रीविशेषावश्यकभाष्ये। एवमपि परस्परं प्रतिपक्षतायामपि सत्यां यदि धर्मप्रेम–परस्परं धर्मप्रीतिः स्यात्तर्हि निष्कारणकार्योत्पत्तिः तन्त्वादिकारणमन्तरेणापि पटादिलक्षणकार्योत्पत्तिः प्रसक्तेति गाथार्थः ॥ ५२ ॥ अथ स्तनिकस्य गाथात्रयेण हितमुपदिशन् प्रथमगाथामाह—

तम्हा तित्थं चइउं तित्थाहिअमभिनिवेस महपावं । चइऊणमण्णउत्थिअतित्थासयणं परं सेअं ॥५२॥

यस्मात् तीर्थप्रतिकूलता धर्मविरोधिनी तस्मात्तथाविधकर्मपरिणत्या यदि तीर्थाज्ञा कर्तुमशक्या तथाऽप्ययमुपदेशो–यत्तीर्थं त्यक्त्वा तीर्थाहितं–तीर्थस्य पीडाकारि रोगकल्पमभिनिवेशं महापापं त्यक्त्वा अन्यतीर्थिकाश्रयणं–शाक्यादिदर्शनावलम्बनं परं–केवलमु-

त्कृष्टं वा श्रेयो-मङ्गलं, कुपाक्षिकमार्गाश्रयणापेक्षयाऽन्यतीर्थिकमार्गाश्रयणं सुन्दरमेवेतिगाथार्थः॥५३॥ अथ तत्र दृष्टान्तमाह—

जह नाम कोइ दुहगो निवाऽमियभायणं तु महुरंपि । विसमवि चइउं चउरो भक्खंतो मिच्छकंदाइ ॥५४॥

यथा नामेति कोमलामन्त्रणे दुर्भगोऽमृतभाजनं-पीयूषपात्रं तु त्यक्त्वा मधुरमपि विषं त्यक्त्वा म्लेच्छकन्दादि-लशुनादि भक्षयन् चतुरो भवति.यद्यपि लशुनादिभक्षणं कुलीनानां निन्द्यं दुर्गन्धदुःस्वाद्यं भक्षितुमनुचितं, विषं तु किंचिन्नालिकेरकर्पूरादिसंयोगजन्यं सुस्वाद्यं सुगन्धि सुवर्णं न भवति, तथापि तथाविधमपि विषं त्यक्त्वा, अपिरेवार्थे व्यवहितः संबध्यते, त्यक्त्वैव तुच्छभक्षणीयमपि तथाविधं लशुनं भक्षयन् न जीवितव्यान्मुच्यते.तथा 'जीवन्नरो भद्रशतानि पश्यती'ति न्यायात् पुनरपि स सुभोजनं लभते, तथाऽन्यतीर्थिकः कश्चित्तथाविधोऽपि इह परत्र वा बोधिं लभते, अभिनिवेशी तु नियमाद्दुर्लभबोध्येव, यदागमः—"पंचहिं ठाणेहिं जीवा दुल्लहबोहिअत्ताए कम्मं पकरेंति, तं०-अरहंताणं अवण्णं वयमाणे१ अरहंतपण्णत्तस्स धम्मस्स अव०२ आयरिअउवज्झायाणं अ०३ चाउवण्णस्स संघस्स अ०४ विविक्कतवबंभचेराणं देवाणं अ०५" इति श्रीस्थानाङ्गे, अत्र त्वेकस्याप्यवर्णवादेन दुर्लभबोधिता भणिता,उत्सूत्रभाषी तु युगपत्सर्वेषामप्यवर्णवादीति प्रागुक्तमिति गाथार्थः ॥५४॥ अथोत्सूत्रमार्गाश्रयणापेक्षया श्रेयोऽन्यतीर्थिकमार्गाश्रयणमित्यत्रापि दृष्टान्तमाह—

तेणेव जिणवरेणं जइलिंगधरो अकज्जकज्जकरो । तम्हा चइउं लिंगं सुसावगो सुंदरो भणिओ ॥५५॥

येन कारणेन प्रागुक्तं तेनैव कारणेन यदि यतिलिङ्गधरो अकार्यकार्यकरः-अब्रह्मसेवाद्यासक्तः, तस्मात्कारणाद्यतिलिङ्गं त्यक्त्वा सुश्रावकः शोभन इति जिनवरेण भणितः,अयं भावः शोभनः, यतः-"नय पवयणुड्डाहकरे कंठगयपाणसेसेऽवि"त्ति प्रवचनवचः, तथा यदि मिथ्यात्वं तूभयोरप्यावश्यकं तथाप्युत्सूत्रभाषणं हि तीर्थस्य महाशातना, तत्परित्यागेनैव तच्छोभनमिति गाथार्थः ॥५५॥

अथेह शेषप्रसिद्धोत्सूत्रज्ञापनाय गतिमाह—

पुण्णिमपक्खिअपच्छाइरिआपमुहाइं जाइं इअराइं। ताइंचिअ तिअ(तियचउ)विस्सामुत्ताइं इहंपि नेआइं ॥५६॥

पूर्णिमापाक्षिकं पश्चादीर्या श्रावकाणां सामायिके इत्यादीनि यान्युत्सूत्राणि तानि तृतीयचतुर्थविश्रामोक्तानीहापि ज्ञेयानीति गाथार्थः ॥५६॥ अथ चतुर्थविश्रामोपसंहारमाह—

एवं कुवक्खकोसिअ० कहिओ इह पंचमो थणिओ ॥५७॥ नवहत्थकायरायं०॥५८॥ इअसासणउदयगिरि० ॥५९॥

एवं–प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते चक्खुत्ति–चक्षुः स्वकीयलोचनं तस्य यः प्रभावो–महिमा नीलादिवस्तुग्रहणशक्तिस्तेन रहितो–विकलः पञ्चमः स्तनिकः–आञ्चलिकः कथितः, अयं भावः–उदिते हि सहस्रकिरणे यथा कौशिको निजचक्षुःप्रभावरहितो भवति, अयं जगत्स्वभावः यत्तामसकुलस्य सूर्यकिरणा अतिश्यामतया भासन्ते, यदाह श्रीसिद्धसेनदिवाकरः —"सद्धर्मबीज०" तथा कुपक्षकौशिकसहस्रकिरणे कुपक्षाणां पुरस्तादुद्भाविते कुपाक्षिकविशेषः पञ्चनिकोऽपि निजचक्षुः–कुश्रद्धानरूपा कुदृष्टिस्तत्प्रभावरहितो भवति–तस्य स्वमतिविकल्पिताः कुयुक्तयो न स्फुरन्ति, यद्वा कुदृष्टिरेव सुदृष्टिर्भवतीत्येवं स्तनिको भणित इति गाथार्थः॥५७॥ अथायं स्तनिकः कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सत्यस्मिन् प्रकरणे भणित इति प्रदर्शनार्थं गाथामाह–व्याख्या प्रथमविश्रामोक्ता बोध्या॥५८॥ अथैतत्प्रकरणकर्त्तृनामगर्भितामाशिरभिधायिकां गाथामाह–अत्रापि व्याख्या प्राग्वत्॥५९॥

इअ कुवक्खकोसिअसहस्सकिरणंमि० अंचलिअमयनिराकरणनामा पंचमो विस्सामो सम्मत्तो ॥

इति कुपक्षकौशिकसहस्रकिरणे प्रवचनपरीक्षापरनाम्नि स्तनिकनिराकरणः पञ्चमो विश्रामः समाप्तः

॥ ॐ ॥

અમદાવાદ--ઝાંપડાની પોળ-નિવાસી

**શેઠ મોહનલાલ છોટાલાલ તરફથી**

તેમનાં ધર્મપત્ની

**માણેકબાઇએ**

**નવપદજીની ઓળી**

જ્ઞાન પંચમી, મૌન એકાદશી. વીશ-સ્થાનક અને રોહિણીનો તપ કરેલો

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિ નિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે. વિક્રમ સં. ૧૯૮૫